वैकृतञ्च। यथा। अतिशीलितपारुष्यमभिशिथिलवैकृतमित्यभिनन्द.। इयमिद रसे क्लीवम्। तदालम्बने तु मांसशोणितादौ त्रिषु। इति तट्टीकायां भरत:॥

बीभत्सु., पु, (बीभत्सतीति। बध+सन्+उ। युद्धे न्यायपथेन शत्रुहननादस्य तथात्वम्। एतन्निरुक्तिरुक्ता। यथा, महाभारते ४। ४२। १८।
"न कुर्य्यां कर्म्म बीभत्सं युध्यमान: कथञ्चन।
तेन देवमनुष्येषु बीभत्सुरिति विश्रुत.॥")
अर्ज्जुन:। यथा,—
अर्ज्जुन: फाल्गुनो जिष्णु: किरीटी श्वेतवाहन:।
बीभत्सुर्विजय: कृष्ण: सव्यसाची धनञ्जय.॥
इति महाभारते। ४। ४०। ६॥

बुक्क, कि श्वादिशब्दे। इति कविकल्पद्रुम॥ (चुरा०-पक्षे भ्वा० पर०-सक०-पक्षे अक०-सेट्।) पञ्चमस्वरी कोपध.। चुरादिपक्षे कथने भ्वादिपक्षे कुक्कुरादिशब्देऽयमिति रमानाथ:। कि, बुक्कयति वाचा बहुलोक.। बुक्कति श्वा। इति दुर्गादास.॥

बुक्कं, त्रि, (बुक्कयति बुक्बुक् इत्यव्यक्तशब्द करोतीति। बुक्क+पचाद्यच्।) वक्षोऽभ्यन्तरमांसविशेष। तत्पर्य्याय:। अग्रमांसम् २ हृदयम् ३ हृत् ४। इत्यमर'। २। ६। ६४॥ केचित्तु बुक्कात् पृथगेव हृदयान्तर्गतमांसविशेषे पद्माकारे हृदयादिद्वयमाहु। धातोरनेकार्थत्वात् बुक्कति खादुत्वात् स्वयते बुक्क बुक्क कि श्वादिशब्दे घञ्। नान्त. पुलिङ्गोऽप्ययम्। स्त्रीलिङ्गोऽपीत्येके। इति स्वामी॥ बुक्का स्त्री बुक्क. पुमानपि। शोणितेषु स्त्रियां बुक्का बुक्कस्तु समये द्वयोरिति रभसात्। नदादित्वात् स्त्रियां बुक्कीत्यर्थे। बुक्कनान्तं क्लीवमप्युत्पन्नमितिरुद्रकलिङ्गादय.॥ उरस्यपि च बुक्कायां हृदय मानसेऽपि चेति त्रिकाण्डशेष.॥ बुक्कशब्दस्य उकारस्य ऋकारादेशे तथैव हृक्कादिरूपञ्च। अग्रञ्च तन्मांसञ्चेति अग्रमांस बुक्कस्याग्र संमुखीभूत मांस बुक्काग्रमांसमित्येक नामे त्यन्ये। इति तट्टीकायां भरत.॥

बुक्क:, पु, (बुक्कयति शब्दायत इति। बुक्क+अच्।) छाग। इति त्रिकाण्डशेष'॥ समये पु स्त्री। इति रभस.॥

बुक्कन, क्ली, (बुक्क कि श्वादिशब्दे+भावे ल्युट्।) कुक्कुरशब्द.। तत्पर्य्याय.। भषणम् २। इति हेमचन्द्र। ६। ४३॥

बुक्का, स्त्री, (बुक्क+टाप्।) बुक्कम्। इत्यमरटीकायां भरत:। शोणितम्। इति रभस:॥

बुक्का, [न्] (बुक्क+कनिन्।) पु बुक्कम्। इत्यमरटीकायां भरत:॥

बुक्काग्रमांस, क्ली, (बुक्कस्याग्रमांसं।) हृदयम्। इत्यमरटीकायां रायमुकुट:॥

बुक्कार:, पु, (बुक्क कि श्वादिशब्दे भावे घञ्। बुक्कं निनादस्तस्य कार: करणम्। "एकवर्ग्यत्रयो यत्र मध्यमस्तत्र लुप्यते" इति न्यायात् मध्यस्य ककारस्य लोप:।) सिंहध्वनि.। इति हारावली। १९४॥

बुक्की, स्त्री, (बुक्क+गौरादित्वात् ङीष्।) बुक्कम्। इत्यमरटीकायां भरत:॥

बुट, कि हिंसे। इति कविकल्पद्रुम.॥ (चुरा०-पक्षे भ्वा०-पर०-सक०-सेट्।) कि बोटयति बोटति। इति दुर्गादास:॥

बुड, शि उत्सर्गे। संवृतौ। इति कविकल्पद्रुम:॥ (कुटा०-तुदा०-पर०-सक०-सेट्।) शि बुडति अबुडीत् बुबोड इति दुर्गादास:॥

बुद, इर् ञ उ निशामने। इति कविकल्पद्रुम.॥ (भ्वा०-उभ०-सक०-सेट्।) पञ्चमस्वरी। इर् अबुदत् अबोदीत्। ञ बोदति बोदते। उ बोदित्वा बुत्वा। निशामनमालोचनं प्रणिधानमिति यावत्। इति दुर्गादास:॥

बुद्ध:, पु, (बुध्यते स्म इति। बुध+क्त। यद्वा भावे क्त बुद्धं ज्ञानमस्यास्तीति अर्श आद्यच।) भगवदवतारविशेष.। स तु दशावतारान्तर्गतनवमावतार:। यथा,—
"तत. कलौ संप्रवृत्ते संमोहाय सुरद्विषाम्।
बुद्धो नाम्नाञ्जनसुत: कीकटेषु भविष्यति॥"
इति श्रीभागवते १ स्कन्धे ३ अध्याय:॥

अञ्जनस्य सुत। अजिनसुत इति पाठे अजिनोऽपि स एव। कीटकेषु मध्ये गयाप्रदेशे। इति श्रीधरस्वामी॥ तत्पर्य्याय:। सर्व्वज्ञ २ सुगत. ३ धर्म्मराज. ४ तथागत: ५ समन्तभद्र: ६ भगवान् ७ मारजित् ८ लोकजित् ९ जिन: १० षडभिज्ञ. ११ दशबल: १२ अद्वयवादी १३ विनायक. १४ मुनीन्द्र: १५ श्रीघन: १६ शास्ता १७ मुनि: १८। इत्यमर.। १। १। १३॥ धर्म्म १९ त्रिकालज्ञ: २० धातु २१ बोधिसत्त्व: २२ महाबोधि २३ आर्य्य. २४ पञ्चज्ञान' २५ दशार्ह २६ दशभूमिग २७ चतुस्त्रिंशज्जातकज्ञ: २८ दशपारमिताधर. २९ द्वादशाक्ष. ३० त्रिकाय ३१ संगुप्त. ३२ दयाकूर्च्च ३३ खजित् ३४ विज्ञानमातृक. ३५ महामैत्र: ३६। इति हेमचन्द्र.। २। १४६॥ धर्म्मचक्र. ३७ महामुनि ३८ असम. ३९ खसम' ४० मैत्री ४१ बल. ४२ गुणाकर. ४३ अकनिष्ठ: ४४ त्रिशरण. ४५ बुध. ४६ वज्री ४७ वागाशनि: ४८ जितारि. ४९ अर्हण ५० अर्हन् ५१ महासुख. ५२। इति शब्दरत्नावली॥ महाबल ५३। इति जटाधर'॥*॥

ईश्वरनिरूपणे बुद्धविशेषाणा मतमाह। सर्व्वज्ञ इति सौगता'। निरावरण इति दिगम्बरा.। लोकव्यवहारसिद्ध इति चार्व्वाका। शरीराण्येव चेतनानि गौरोऽहं जानामीत्यादिज्ञानेन गौरत्वज्ञानवत्त्वयो. सामानाधिकरण्यानुभवादिति चार्व्वाकाणा मतञ्च। तेषा मते क्षणभङ्गुरत्वं नन्वस्तु क्षणभङ्ग: पूर्व्वपुञ्जाच्चोत्तरपुञ्जोत्पत्तिस्तथा च पुञ्जनिष्ठ एव कुर्व्वद्रूपत्वाख्यजातिविशेष' स्मरणजनकतावच्छेदक इति न दोष'। इति कुसुमाञ्जलिप्रथमस्तवकटीकायां रामभद्र:॥*॥ बुद्धाना दशविध मतभेदमाह।

"वदन्ति पुत्त्र आत्मेति १ दृढ़प्राकृतबुद्धय।
देह आत्मेति २ चार्व्वाका इन्द्रियाण्यपरे ३ च ते॥
तेऽन्ये प्राण ४ स्ततोऽन्ये ते मन ५ आत्मेति वादिन।
बुद्धिरात्मेति ६ बौद्धा वै शून्यमात्मेति ७ तेऽपरे॥
याज्ञिका यज्ञपुरुषं सर्व्वज्ञं ८ सौगता विदु'।
निरावरण ९ माहुर्य दिगम्बरमतानुगा:॥
चार्व्वाकाश्चापि लोकाना व्यवहारप्रसिद्धकम् १०॥'
इत्यात्मप्रकाश.॥*॥

पण्डित:। बुधिते, त्रि। इति मेदिनी। धे, १०॥
(बुद्धावतारस्य विवरण यथा,—

इह खलु बौद्धशास्त्रसमूहेषु सम्प्रोक्ता पञ्चविंशतिर्बुद्धा दृश्यन्ते। तेषां शुद्धोदनौरसान मायादेवीगर्भजात: शाक्यसिंहसर्व्वार्थसिद्धार्कबन्धुगौतमेति नामचतुष्टयेन प्रसिद्धोऽन्तिमतम लोकविश्रुतो बुद्ध: कपिलवस्तुनगरे कलेश्चतु:शतषडशीत्यधिकद्विसहस्रमितेषु गतवर्षेषु शुक्रवासरे सुरद्विषां सम्मोहनाय साक्षाद् विवेकमूर्त्ति. स्वेच्छाविग्रहेण प्रादुर्बभूव।

अथ स वयसा सह क्रमेण शीलगुणसाहसरूपौदार्य्यबलवीर्य्यादिभिर्वर्द्धते स्म। उदिते यौवने पित्राज्ञया स शाक्यान्वयजां मनोज्ञा रूपलावण्यवतीं दण्डपाणितनया गोपानाम्नीमनुमतामुपयेमे।

जननसमयेऽस्य गणकाच्छ्रुतवान् नरेश्वर शुद्धोदन व्याधिग्रस्तजराजर्ज्जरसन्यासिमृतजनदर्शनाज्जातवैराग्य' पुत्त्रस्ते गृह सन्त्यक्ष्यतीति। तस्मात् सञ्जातशङ्को राजा शिल्पिभि रुपवनपरिवृत सुरम्य रम्यं हर्म्यत्रय भूभूषण निर्म्मापयामास। तत्रासौ युवतीजनपरिवेष्टित-सुपच्छन्दित विषयविमुग्धचेतसं तनय निवृत्तनिर्गमनम् स्वच्छन्देनान्ववासयत। अथ गच्छति कालेऽस्य शिथिलीबभूव भोगसन्तर्ष। तत. कारागारमिव प्रतीयमान निष्कुटनिकेतं विहायास्य धरण्या नानास्थान द्रष्टुमिच्छा सञ्जाता। तत: सोऽस्मै पित्रे शुद्धोदनाय सम्बोधयामास पर्य्यट्य नगर प्रजानाम्दहिमवस्थाञ्च विलोकयितु वासना मे बलवतीति। राजा प्रथम निवारयितुमियेष प्रलोभनेन। स नैव तु ततो विरराम। अथ विज्ञाय निर्बन्ध पुत्त्रस्य मन्त्रिगणमादिदेश कुमारे शाक्यसिंहे भ्रमितुमारब्धे राष्ट्रे मे जरातुरसन्यासिमृतमानवा केनापि कारणेन राजवर्त्मनि नोपतिष्ठन्तामिति विघोषयति। तथानुष्ठिते कुमार रथमारुह्य

सारथिना सह बहिर्निर्गन्तुमारब्धवान्। ततश्चतुर्दिक्षु प्रभूतैर्विस्तारम्बरैर्नयोऽस्य प्राचोदि। नगरं पौरागान् मनसि परां मुदं प्राप्तवान्।
अथ स जरया जर्ज्जरतनुं मानवमेकं दृष्टवान्। इतः प्राक् कदाचिदपि स शाक्यसिंहो जगतो दुःखं नानुभूतवान् इदानीं निरीक्ष्य प्रथमं स जराग्रस्तं विपरक्षमस्य विज्ञातुं कुतूहली सारथिं पप्रच्छ। तदुक्तं यथा —

"किं सारथे। पुरुष दुर्ब्बल अल्पस्थाम
उच्छुष्कमांस रुधिरत्वचस्नायुनद्ध.।
श्वेतशिरो विरलदन्तकृशाङ्गरूप
आलम्ब्य दण्ड व्रजतेऽसुख स्खलन्त॥"

सारथिराह।

एषो हि देव। पुरुषो जरयाभिभूत
क्षीणेन्द्रियः सुदुःखितो बलवीर्य्यहीनो।
बन्धुजनेन परिभूत अनाथभूत
कार्य्यासमर्थ अपविद्ध वनेव दारु॥

बोधिसत्त्व आह।

कुलधर्म्म एष अयमस्य हित भणाहि
अथवापि सर्व्वजगतोऽस्य इयवस्था।
शीघ्रं भणाहि वचनं यथभूतमेत-
च्छ्रुत्वा तथार्थमिह योनि सचिन्तयिष्ये॥

सारथिराह।

नैतस्य देव। कुलधर्म्म न राष्ट्रधर्म्म
सर्व्वे जगस्य जरयौवनधर्षयाति।
तुभ्यपि मातृपितृबान्धवज्ञातिसंघो
जरया अमुक्त न हि अन्यगतिर्जनस्य॥"

बोधिसत्त्व आह।

धिक् सारथे। अबुधबालजनस्य बुद्धि-
र्यद्यौवनेन मदमत्त जरां न पश्यी।
आवर्त्तयाशु इह रथ पुनरहं प्रवेक्ष्ये
किं मह्य क्रीड़रतिभिर्जरयाश्रितस्य॥"

इति ललितविस्तरे १४ अध्याये।

अथ शाक्यसिंह सारथिं सन्दिदेश रथं सञ्चालयेति। गत्वा नगरस्य दक्षिणे द्वारि व्याधिग्रस्तं यातनापरीतपुरुषमेकमीक्षाञ्चक्रे। ततः स सारथिं पप्रच्छ। तदुक्तं यथा,—

"किं सारथे। पुरुष रूपविवर्णगात्र.
सर्व्वेन्द्रियेभि विकलो गुरु प्रश्वसन्त.।
सर्व्वाङ्गशुष्क उदराकुल प्राप्तकृच्छ्रा
मूत्रे पुरीष स्वकि तिष्ठति कुत्सनीये॥"

सारथिराह।

एषो हि देवपुरुषः परम गिलानो
व्याधीभय उपगतो मरणान्तप्राप्त.।
आरोग्यतेजरहितो बलविप्रहीनो
अत्राणद्वीपशरणो ह्यपरायणश्च॥"

बोधिसत्त्व आह।

"आरोग्यता च भवते यथ स्वप्नक्रीड़ा
व्याधिर्भयश्च इम ईदृश घोररूपम्।
को नाम विज्ञपुरुषो इम दृष्ट्व ह्यवस्था
क्रीडारतिञ्च जनयेच्छुभसञ्ज्ञिता वा॥"

अथ खलु भिक्षवो बोधिसत्त्वः प्रतिनिवर्त्य रथवरं पुनरपि पुरवरं प्राविशत्।
इति हि भिक्षवो बोधिसत्त्वोऽपरेण कालसमयेन पश्चिमेन नगरद्वारेणोद्यानभूमिमभिनिष्क्रामन् ददर्श पूर्व्वं सोऽद्राक्षीत् पुरुषं मृतं कालगतं मञ्चे समारोपितं चैलवितानीकृतं ज्ञातिसंघपरिवृतं सर्व्वैः रुदद्भिः क्रन्दद्भिः परिदेवमानैः प्रकीर्णकेशैः पांशावकीर्णशिरोभिरुरांसि ताड़यद्भिरुत्क्रोशद्भिः पृष्ठतोऽनुगच्छद्भिः। दृष्ट्वा च पुनर्बोधिसत्त्वो जानन्नेव सारथिमिदमवोचत्।

"किं सारथे। पुरुष मञ्चोपरि गृहीतो
उद्धूत केशनख पांशु शिरे क्षिपन्ति।
परिवारयित्व विहरन्त्युरस्ताड़यन्तो
नानाविलापवचनानि उदीरयन्त॥"

सारथिराह।

"एषो हि देवपुरुषो मृतु जम्बुद्वीपे
न हि भूय मातृपितृ द्रक्ष्यति पुत्रदारान्।
अपहाय भोगगृहमातृपितृमित्रज्ञातिसंघं
परलोक प्राप्तु न हि द्रक्ष्यति भूय ज्ञातिम्॥"

बोधिसत्त्व आह।

"धिग्यौवनेन जरया समभिद्रुतेन
आरोग्य धिग्विविधव्याधिपराहतेन।
धिग्जीवितेन पुरुषो न चिरस्थितेन
धिक्पण्डितस्य पुरुषस्य रतिप्रसङ्गैः॥
यदि जर न भवेया नैव व्याधिर्न मृत्यु-
स्तथपि च महदुःख पञ्चस्कन्ध धरन्तो
किं पुन जरव्याधिमृत्यु नित्यानुबद्धा.
साधु प्रतिनिवर्त्य चिन्तयिष्ये प्रमोक्षम्॥

अथ खलु भिक्षवो बोधिसत्त्व. प्रतिनिवर्त्य तं रथवरं पुनरपि पुरं प्राविशत्॥ इति हि भिक्षवो बोधिसत्त्वस्यापरेण कालसमयेनोत्तरेण नगरद्वारेणोद्यानभूमिमभिनिष्क्रामतस्तरेव देवपुत्रैर्बोधिसत्त्वस्यानुभावेनैव तस्मिन् मार्गे भिक्षुरभिनिर्म्मितोऽभूत्॥ अद्राक्षीद्बोधिसत्त्वस्तं भिक्षुं शान्तं दान्तं संयतं ब्रह्मचारिणमनतिक्षिप्तचक्षुर्युगमात्रप्रेक्षिणं प्रासादिकेनेर्य्यापथेन सम्पन्नं प्रासादिकेनाभिक्रमप्रतिक्रमेण सम्पन्नं प्रासादिकेनालोकितव्यवलोकितेन प्रासादिकेन सङ्घाटीपिण्डपात्रचीवरधारणेन मार्गे स्थितम्। दृष्ट्वा च पुनर्बोधिसत्त्वो जानन्नेव सारथिमिदमवोचत्।

"किं सारथे। पुरुष शान्त प्रशान्तचित्तो
नोत्क्षिप्तचक्षु व्रजते युगमात्रदर्शी।
काषायवस्त्रवसनो सुप्रशान्तचारी
पात्रं गृहीत्व न च उद्धत उन्नतो वा॥

सारथिराह।

एषो हि देवपुरुष इति भिक्षुनामा
अपहाय कामरतयः सुविनीतचारी।
प्रव्रज्यप्राप्त शममात्मन एषमाणो
संरागद्वेषविगतो तिष्ठति पिण्डचर्य्या॥

बोधिसत्त्व आह।

साधु सुभाषितमिदं मम रोचते च
प्रव्रज्य नाम विदुभिः सततं प्रशस्ता।
हितमात्मनश्च परसत्त्वहितश्च यत्र
सुखजीवितं सुमधुरममृतं फलञ्च॥"

इति ललितविस्तरे १४ अ.।

ततः संक्षुब्धचित्तोऽसौ स्वकीयं गृहान्तं विवेश। दिवसेऽस्मिन् राहुलनामा पुत्रोऽस्य समजनि। राजा शुद्धोदनः स्वाङ्गजस्य भ्रमणवृत्तान्तं सर्व्वं निशम्यास्य सन्न्यासग्रहणं शङ्कमानः चतुर्षु नगरद्वारेषु सैनाधृतान् सन्निवेशयति स्म तस्य परिरक्षणार्थम्।
रतिरसाभिज्ञान् युवतिजनानन्तःपुरेषु बहुतरान् प्रेषयामास बोधिसत्त्वस्य प्रमोहनाय। अथागता रजनी, सिद्धार्थस्य तु चित्तं व्याकुलितमतीव गेहान् प्रव्रज्य भैक्ष्यग्रहणार्थम्। ततो शय्यादिप्रमोदान् परं निद्रिता सर्व्वा युवतीर्विलोक्य शयनात् शनैः शनैरुत्थितो व्यलोकयत्।

"तत्र काश्चिद्व्यपकृष्टवस्त्राः काश्चिद् विधुतकेशाः काश्चिद्विकीर्णाभरणाः काश्चिद्विभ्रष्टमुकुटाः काश्चिद्विक्षिप्तैरंशैर्विगोपितगात्राः काश्चिद्विसंस्थितमुखाः काश्चिद्विपरिवर्त्तितनयनाः काश्चित् प्रस्यन्दमानलालाः काश्चिद्धसन्त्यः काश्चित् प्रदहसन्त्यः काश्चित्प्रलपन्त्यः काश्चिद्दन्तान् कटकटायन्त्यः काश्चिद्विवर्णवदना. काश्चिद्विसंस्थितरूपाः काश्चित् प्रलम्बितबाहव. काश्चिद्विक्षिप्तवदना. काश्चिदुद्घाटितशीर्षाः काश्चिदवगुण्ठितशीर्षाः काश्चिद्विपरीतवर्त्तितमुखमण्डलाः काश्चित् प्रध्वस्तशरीराः काश्चिद्भग्नगात्राः काश्चिन्निकुब्जाः घुरघुरायमाणाः काश्चिन्मृदङ्गमुपगुह्य परिवर्त्तितशीर्षशरीराः काश्चिद्वीणावल्लक्यादिपरिष्वज्य काश्चिद्वेणुं दन्तैः कटकटायन्त्यः काश्चित् किम्पलनकुलसम्पताड़ावकर्षितवाद्यभाण्डा. काश्चिन्निमेषोन्मेषपरिवर्त्तितनयनाः काश्चिद्विवृतास्या एव तद्विकृतं धरणीतलगतमन्तःपुरं निरीक्षमाणो बोधिसत्त्वः श्मशानसंज्ञामुत्पादयति स्म।" तत्रेदमुच्यते।

"तां दृष्ट्व उद्विग्न स लोकनाथ
करुणं विनिश्वस्य इद जगाद।
अहो बता कृच्छ्रगता भवेय
कथं रतिं विन्दति राक्षसीगणे॥
अतिमोहतमावृते दुर्म्मति-
कामगुणैर्निर्गुणसञ्ज्ञिन।
विहगपञ्जरगता यथा नहि
लभन्ति कदाचिद् विनिःसृतम्॥"

इति ललितविस्तरे। १५ अध्याये॥

अतीतेऽथ निशीथे सिद्धार्थोऽश्वपालमाहूयाह "जरामरणपञ्जरनियतसत्त्वपरिमोचनस्य समयो ह्युपस्थितो मे।" अतएव गृहीष्यामि सन्न्यासम्। विस्मितोऽश्वपालोऽब्रवीत् राजपुत्रस्य ते सन्न्यासग्रहणमनुचितं न समर्थोऽसि सन्न्यासाश्रमस्य कष्टानि सोढुम्।

कम्बल इत्यते अन्ये च बहवो बुद्धपर्य्यस्तिष्ठन्ति, न ते लोके कदापि बुद्धनाम्ना परिचाययितुं शेकुस्तर्हि भवान् किं न लज्जते अयं बुद्ध इत्यात्मानं परिचाययितुम्। बुद्धस्तम् ‘कुमार-दृष्टान्तसूत्र’, श्रावयामास तेनोन्मीलितचक्षुः शिष्योऽभूत्तस्य ततः प्रसेनजित् कोशलराजः। दीक्षिते राज्ञि कोशलेश्वरे बुद्धः शुद्धोदनाय सचारं प्रेषयामास “राजन्। पुत्रस्ते चचादिदानीं मृत्युनिवारणमन्तनम्। तेनैव सोऽखिलस्य जगतस्तृष्णां पापीयसीं वारयामास, शुद्धोदन श्रावयपतिराकर्ण्य वृत्तान्तं परां मुदमवाप। आनेतुं पुत्रं कपिलवस्तुनगर्य्यामसौ दूतं पुनः पुनः प्रेषितवान् यो यः प्रयाति दूतोऽस्य सकाशं न स पुनः प्रतिनिवृत्तः स्थितोऽस्य दीक्षितस्तत्रैव। शुद्धोदनः साधुं कालुदायीतिनामानं पत्रेण सह प्रेषितवान्। उदायी प्रागमनादङ्गीचकार यदि चाहं दीक्षितोऽप्यभविष्यम् वारमेकमपि प्रतिन्यवर्त्तिष्ये। उदायी बुद्धस्य समीपं गत्वैव दीक्षितः। बुद्धस्तु प्रतिज्ञापरिपूरणाय शुद्धोदनस्यान्तिकं प्रेषयामास। उदायी गत्वाह राजानं भो भूप। देवो बुद्धोऽत्रागमिष्यन्नत्वयस्यातुमिच्छ्न्नगर्य्याम् विहारेऽवस्थातुमियेष सः। राजा वेलवनस्थमिव न्यग्रोधारामं कपिलवस्तुनगरे विरचय्यागमनमस्य प्रतीक्षाञ्चक्रे। तत्रागत्य बुद्धो न्यग्रोधारामे तस्थिमुवास। अत्रागत्य पितृव्यौ शुद्धोदनोऽमृतोदनश्चास्य लक्ष लक्ष श्रावकसमन्तयश्च शिष्या अभूवन्। तत्रावस्थानसमये बुद्धस्य पालयित्री गौतमी वनिता यशोधरा च भैक्ष्याश्रमं गृहीतवत्यौ पुत्रोऽपि राहुलोऽजातकनिष्ठो जनकेन दीक्षितः।

ततो बुद्धो गृध्रकूटमागत्य वसतिञ्चक्रे। समयेऽस्मिन् देवदत्तोऽस्य ज्ञातिजः शत्रु शिल्पिन दाक्षिणात्यादानिनाय। तेन च गिधकूटं बुद्धकूटयन्त्रं निरमायि। अमेनाहतो बुद्धो यथा प्राप निक्षेपणावसरे यन्त्रस्य स बुद्ध रिरक्षिषु कुम्भीरस्तत्प्रहारेण प्राणांस्तत्याज।

कालेऽस्मिन् विम्बसारे मागधे पञ्चत्वं गते अजातशत्रुर्लुब्धो दुर्दान्तो मगधं शशास, देवदत्तोऽस्य मित्रमासीत्। एकदाजातशत्रुर्बुद्धसन्निधावागत्य पप्रच्छ तं “नानाकर्म्मसु व्यासक्तो मनुष्यो धनमभीष्टमुपार्ज्जयितुं यतते, प्राप्य तु वाञ्छितं धनं सुखी च भवति, धर्म्मे तथा तु निधाय मनस्तद्रूपं सुखं प्रत्यक्षमाप्नुयात् किम्? बुद्धः प्रत्युवाच किं कर्म्मणा यागेन होमेन वा। न्यायान्यायौ विफलौ अधमानासत्तमानाश्च तिरस्कारपुरस्कारौ च तद्वन् निष्फलौ। पितरौ नात्मीयौ च योऽस्मिन् जगति प्रज्ञवान् महाशयम्, सत्ये पथि प्रविष्टश्चोस्य जानाति स एव जन्मैव मृत्युरिति। सोऽस्मिन् जन्मन्येवाष्टयोऽष्टयो निर्व्वाणमोक्षं लभते न पुनरायाति सः। पृथिव्यादिभूतचतुष्टयेऽस्य यथाक्रमं भूतान्यभ्यौषधिः। इत्युपदेशेन बुद्धस्य अजातशत्रोर्मनोगतं सत् तत्क्षणादेव प्रसन्नं बभूव। योऽस्य शुश्रूषापात्रमासीत् स इदानीं भक्तिपात्रमस्याभूत्। अजातशत्रुर्बुद्धाद् दीक्षां जग्राह।

गृध्रकूटाद्बुद्धः पाटलीग्राममाजगाम। कपिलनामाश्च साधुर्नामायोऽनेन चलोकि। सम्भाष्य तं पथि गच्छन्सौ चतुर्द्दिशं निरीक्षाञ्चक्रे, आनन्दोऽस्य परिचरो जिज्ञासयामास किमित्य निरीक्षसे आचार्य्य चक्षुषेति। बुद्ध आह आनन्द! परिहास्येऽहमिमं लोकमिदानीम्। ततः स आम्रग्रामं जम्बुग्रामं भद्रग्रामं हस्तिग्रामम् अन्यांश्च इतिमां महानगरं ग्रामानतिक्रम्य भोजनगरं प्राप्तः। स्थानादस्मात् पुष्पकारमहापममागत्यावस्थितः। अथ कुन्दनाम्नो धातुगालकात् मणिगुपिशूकादाहार्य्यं गृहीतवान्।

ततोऽसावानन्दं सम्बोधयामास भो नगरीं कुशीं गन्तास्मि। अतःपरं तथागतो नगरीं मायामतिक्रम्य नदीं हिरण्यवतीं तीर्त्वा निविडं वनमेकं प्राप्तः। अत्रानन्दं प्राह पार्श्वयोरहमतीववेदनया समाक्रान्तोऽस्मि, अतोऽहमत्रैव तिष्ठामीति। आनन्दो जलमानिनाय प्रक्षाल्य पादौ बुद्धो ध्यानं समालम्बे। कालेऽस्मिन्नागत्य पुक्कसो मल्लराजः पादौ बुद्धस्य प्रपूजयामास। बुद्धोऽस्य दीक्षां चकार। सोऽसौ दत्तवान् सौवर्णानलङ्कारान् प्रणम्य च प्रस्थितः। गते मल्लराजे आनन्दं प्राह बुद्धः प्रियान् मे आनन्द! त्वं परिधापयालङ्कारान् सौवर्णानस्मिन्निति। तथानुष्ठिते तदानीं देहस्य ज्योतिषाखिलं जगद् आलोकितमिवासीत्। भक्तिभरेणानन्दः प्राह भगवन्! न दृष्टं कदापि मयाप्रभवतामेतादृशमौज्ज्वल्यं देहस्य। इदं तावत् कथय कारणञ्चास्येति। चकार प्रत्युत्तरं बुद्धो देवो निबोध आनन्द! निर्व्वाप्यत प्रदीपस्य शिखेवाङ्गकान्तिर्मे युतकान्तेरत्र कारणम्।

अनन्तरमुभौ मिलित्वा हिरण्यवत्यास्तीरे आजग्मतुः। बुद्धस्तत्र स्वीयं समस्तं परिच्छदं परिहायैकवसनो नद्या हिरण्यवत्याः कुशाख्यनगर्य्याश्च उभयोर्मध्यदेशस्थ वनं विविक्तं विवेश। अथ प्राह चानन्दं क्लान्तस्य मे शय्यां विधत्स्वेति। आनन्दः शय्यां सज्जीचकार, सुप्तोत्थितो बुद्ध आनन्दाय भिक्षुकाणां कर्त्तव्यसूत्रान्तं विधाय मातृकादीनि धर्म्मतत्त्वान्युपदिदेश। आनन्दस्ततसर्व्वं समाहितेन मनसा जग्राह। तत आनन्दमादिदेश शालवृक्षद्वयोर्मध्ये शय्यां स्थापय निशीथेऽद्य मे श्रेयविज्ञानोदयेति। ततो बुद्धस्तत्रैव समाधिमाधाय समाधिर्व्वं ज्योतिरवलोकयामास ततोऽसौ चिन्तयति स्म निर्व्वाणम्।

भक्तः परमानन्दो रुरोद गाढं तस्यास्य विगलितबाष्पप्रवाहोऽविरलधारया तमाह बुद्ध आनन्द। संसारोऽयमसारः सारो निर्व्वाणमेव तदर्थं यतस्वेति। इत्थं परमकृपालुर्बुद्धदेवो निर्व्वाणं प्राप।

इत्थं च हरेरवतारः—

> “विकीर्य्य विज्ञानमयीं प्रभां प्रभु-
> र्जगत्प्रदीपः प्रथितः प्रभाकरः।
> बुद्धः स राशिर्महसां महोज्ज्वलो
> ज्वलंश्च निर्व्वाणपदं परं गतः॥
> प्रक्षाल्य त्रैलोक्यमलं मलीमसं
> प्रवृद्धसंसारसदूषितं विभुः।
> प्रबोधधाराधरभूरिवारिभी-
> रराज देवो भुवि बोधभास्करः॥”

कुशीनगरस्थिते मुकुटबन्धनचैत्येऽस्य शिष्या देहं भस्मीभूतं चक्रुः। शिष्यवृन्देनास्य पवित्रदेहभस्मावशेषार्थं विवदमानेन निरवधि भस्मभिरेभिरष्टप्रदेशेष्वष्टौ चैत्या निर्म्मिता भवन्त्विति॥)

बुद्धरथ, स्त्री, (बुद्ध कृपाकारतो ग्रासं रथम्।) स्तौपिकम्। स्तोप् इति भाषा। इति त्रिकाण्डशेषः॥

बुद्धिः, स्त्री, (बुध्यतेऽनयेति। बुध्+क्तिन्।) निश्चयात्मिकान्तःकरणवृत्तिः। इति वेदान्तसारः॥ सविकल्पकज्ञानम्। इति चक्रीटीकायां नागभट्टः॥ तत्पर्य्यायः। मनीषा २ धिषणा ३ धीः ४ प्रज्ञा ५ शेमुषी ६ मतिः ७ प्रेक्षा ८ उपलब्धिः ९ चित् १० संवित् ११ प्रतिपत् १२ ज्ञप्तिः १३ चेतना १४। इत्यमरः। १।५।१॥ धारणा १५ प्रतिपत्तिः १६ मेधा १७ मननम् १८ मनः १९ ज्ञानम् २० बोधः २१ प्रक्षिप्तः २२ संख्या २३ प्रतिभा २४। इति राजनिर्घण्टः॥ आत्मगा २५ प्रज्ञा २६ विज्ञानम् २७। इति शब्दरत्नावली॥ * ॥ अस्याः स्वरूपं यथा,—

> “बुद्धिर्विवेचनारूपा सा ज्ञानजननी श्रुतौ॥”

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २३ अध्यायः॥

अस्या अध्यात्माधिभूताधिदैवतानि यथा,—

> “अध्यात्मं बुद्धिरित्याहुः षडिन्द्रियविचारिणी।
> अधिभूतञ्च मन्तव्यं ब्रह्मा तत्राधिदैवतम्॥”

इति महाभारते आश्वमेधिकपर्व्व॥ * ॥

सा च सात्त्विकराजसतामसभेदेन त्रिविधा। सात्त्विकी यथा,—

> “प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्य्ये भयाभये।
> बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ!
> सात्त्विकी॥”

राजसी यथा,—

> “यया धर्म्ममधर्म्मञ्च कार्य्यञ्चाकार्य्यमेव च।
> अयथावत् प्रजानाति बुद्धिः सा पार्थ!
> राजसी॥”

तामसी यथा,—

> “अधर्म्मं धर्म्ममिति या मन्यते तमसावृता।
> सर्व्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ!
> तामसी॥”

इति श्रीभगवद्गीता॥

तस्याः पञ्च गुणा यथा,—
"इष्टानिष्टविपत्तिश्च व्यवसायः समाधिता।
संशयः प्रतिपत्तिश्च बुद्धेः पञ्च गुणान् विदुः॥"
इति महाभारते मोक्षधर्म्मः।
इष्टानिष्टविपत्तिः इष्टानिष्टानां वृत्तिविशेषाणां विपत्तिर्नाशः निद्रारूपा वृत्तिरित्यर्थः। व्यवसायः उत्साहः। समाधिता चित्तस्थैर्य्यं चित्तवृत्तिनिरोध इत्यर्थः। संशयः कोटिद्वयस्पृक् ज्ञानम्। प्रतिपत्तिः प्रत्यक्षादिप्रमाणवृत्तिः। इति तट्टीका॥ *॥ तस्याः सप्त गुणा यथा—
"शुश्रूषा श्रवणञ्चैव ग्रहणं धारणन्तथा।
ऊहोपोहोऽर्थविज्ञानं तत्त्वज्ञानञ्च धीगुणाः॥"
इति हेमचन्द्रः॥ *॥
तस्या वृत्तिः पञ्चधा यथा। प्रमाणम् १ विपर्य्ययः २ विकल्पः ३ निद्रा ४ स्मृतिः ५। इति पातञ्जलम्॥ *॥ बुद्धिक्षयकरा यथा,—
"शोकः क्रोधश्च लोभश्च कामो मोहः परासुता।
ईर्ष्या मानो विचिकित्सा कृपासूया जुगुप्सता॥
द्वादशैते बुद्धिनाशहेतवो मानसा मलाः।"
इति कालिकापुराणे १८ अध्यायः॥ *॥
अपि च।
"बुद्धिक्षयकरा एते मायकाश्चवन्टत्तिकाः॥"
बुद्धिवृद्धिकरा यथा,—
"निम्बाटरूषवृन्ताश्च बुद्धिवृद्धिकरा मताः॥
बुद्धिक्षयकरान्नित्यं त्यजेद्राजा च भोजने।
भोजयेदन्वहं बुद्धिवृद्धिहेतुं नृपोत्तम।॥"
इति कालिकापुराणे ८९ अध्यायः॥ *॥
न्यायमते सा विभुगुणः पुनर्द्विविधा अनुभूतिः स्मृतिश्च। यथा,—
"विभुर्बुद्ध्यादिगुणवान् बुद्धिस्तु द्विविधा मता।
अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा॥
प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे।"
इति भाषापरिच्छेदः॥
बुद्धिमान्, [त्] त्रि, (बुद्धिर्विद्यते यस्य। बुद्धि+मतुप्।) बुद्धियुक्तः। ज्ञानवान्। यथा,—
"तद्बुध्यते यद्विणभक्तशेषं
स बुद्धिमान् यो न करोति पापम्॥"
इति गारुडे ११५ अध्यायः॥
बुद्धिसहाय., पुं, (बुद्धौ बुद्ध्या कृते कार्य्ये इति भावः। सहायः।) मन्त्री। इति हलायुधः॥ मत्या. साहाय्यकर्त्ता च॥
बुद्धीन्द्रियं, क्ली, (बुद्धेर्बुद्ध्यात्मकं वा इन्द्रियम्।) ज्ञानेन्द्रियम्। यथा,—
"मनः कर्णौ तथा नेत्रे रसना त्वक् च नासिके।
बुद्धीन्द्रियमिति प्राहुः शब्दकोशविचक्षणाः॥"
इति शब्दरत्नावली॥
(यथा मनुः। २। ९०-९२।
"श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी।
पायूपस्थं हस्तपादं वाक् चैव दशमी स्मृता॥
बुद्धीन्द्रियाणि पञ्चैषां श्रोत्रादीन्यनुपूर्व्वशः।
कर्म्मेन्द्रियाणि पञ्चैषां पाय्वादीनि प्रचक्षते॥
एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकम्।
यस्मिन् जिते जितावेतौ भवतः पञ्चकौ गणौ॥"
बुद्बुदः, पु वर्त्तुलाकारजलविकारः। जलविम्बुकी इति भुडभुडि इति च ख्यातः। बुद्बुदोऽम्बुस्फोट इत्यरुणः। इत्यमरभरतौ॥ अन्यच्च।
"अभ्रच्छाया तृणादग्निर्नीचसेवा पथे जलम्।
वेश्यारागः खले प्रीतिः षडेते बुद्बुदोपमाः॥"
इति गारुडे ११५ अध्यायः॥
गर्भस्यावयवविशेषः। यथा,—
"पञ्चरात्रेण कललं बुद्बुदाकारतां व्रजेत्॥"
इति सुखबोधः॥
(यदुक्तं यथा,—
"प्रथमेऽहनि रेतश्च संयोगात् कललञ्च यत्।
जायते बुद्बुदाकारं शोणितञ्च दशाहनि॥"
इति हारीते शारीरस्थाने प्रथमेऽध्याये॥)
बुध, इर् ञ अ बेदने। इति कविकल्पद्रुमः॥ (भ्वा०-उभ०-सक०-सेट्। ज्वलादिरयम्।) इर् अबुधत् अबोधीत्। ज बोधः बुधः। ञ बोधति बोधते। इति दुर्गादासः॥
बुध, औ विज्ञापने। इति कविकल्पद्रुमः। (भ्वा०-पर०-सक०-अनिट्।) औ बोद्धा। बोधति गुरुः। इति दुर्गादासः॥
बुध, य ङ औ बेदने। इति कविकल्पद्रुमः॥ (दिवा०-आत्म०-सक०-अनिट्।) य ङ बुध्यते शास्त्रं सुधीः। औ बोद्धा। इति दुर्गादासः॥ (जागरार्थे अकर्म्मकोऽपि। यथा, रघौ।१०।६।
"ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः॥"
"आदिपुरुषो विष्णुश्च बुबुधे योगनिद्रां जहौ इत्यर्थः॥" इति तट्टीका॥)
बुधः, पु, (बुध्यते यः। "बुध+इगुपधज्ञाप्रीकिरः कः।" ३।१।१३५। इति कः।) पण्डितः। तत्पर्य्यायः। विद्वान् २ विपश्चित् ३ दोषज्ञः ४ सन् ५ सुधीः ६ कोविदः ७ धीरः ८ मनीषी ९ ज्ञः १० प्राज्ञः ११ संख्यावान् १२ पण्डितः १३ कविः १४ धीमान् १५ सूरिः १६ कृती १७ कृष्टिः १८ लब्धवर्णः १९ विचक्षणः २० दूरदर्शी २१ दीर्घदर्शी २२। इत्यमरः। २।७।५॥ विदग्धः २३ दूरदृक् २४ सूरी २५ वेदी २६ वृद्धः २७ बुद्धः २८ विधानगः २९ प्रश्निल. ३०। इति शब्दरत्नावली॥ व्यक्तः ३१ प्राप्तरूपः ३२ सुरूपः ३३ अभिरूपः ३४ बुधानः ३५ कवितावेदी ३६ वप्ता ३७ विदितः ३८ कविः ३९। इति जटाधरः॥ (यथा, नवरत्ने। १।
"अत्युग्रं स्तुतिभिर्गुरुं प्रणतिभिर्मूर्खं कथाभिर्बुधं
विद्याभी रसिकं रसेन सकलं शीलेन कुर्य्याद्वशम्॥")
नवग्रहान्तर्गतचतुर्थग्रहः। स च वृहस्पतिभार्य्यातारागर्भे चन्द्राज्जातः। तत्पर्य्यायः। रौहिणेयः २ सौम्यः ३। इत्यमरः। १।३।२६। हेमा ४ वित् ५ ज्ञः ६ बोधनः ७ इन्दुपुत्रः ८। इति ज्योतिस्तत्त्वम्॥ *॥ तस्य जन्मादिवृत्तान्तं यथा। "महावलेपाच्च सकलदेवगुरोर्वृहस्पतेस्तारां नाम पत्नीं जहार। बहुशस्तु वृहस्पतिचोदितेन भगवता ब्रह्मणा चोद्यमान. सकलैश्च देवर्षिभिर्याच्यमानोऽपि न मुमोच। तस्य वृहस्पतिद्वेषादुशना पार्ष्णिग्राहोऽभूत्। अङ्गिरसश्च सकाशादुपलब्धविद्यो भगवान् रुद्रो वृहस्पतेः साहाय्यमकरोत्। यतश्चोशना ततो हि जम्भकुम्भाद्याः समस्ता एव दैत्यदानवनिकाया महान्तमुद्यममचक्रुः। वृहस्पतेरपि सकलदेवसैन्ययुक्तः सहायः शक्रोऽभवत्। एवं तयो रतीवोग्रः संग्रामस्तारानिमित्तस्तारकामयनामाभवत्। ततश्च समस्तशस्त्राण्यसुरेषु रुद्रपुरोगमा देवा देवेषु चाशेषदानवा मुमुचुः। एवञ्च देवासुराहवक्षोभक्षुब्धहृदयमशेषमेव जगद् ब्रह्माणं शरणं जगाम। ततश्च भगवानप्युशनसं शङ्करमसुरान् देवांश्च निवार्य्य वृहस्पतये तारामदात्। ताञ्चान्तःप्रसवामवलोक्य वृहस्पतिराह। नैष मम क्षेत्रे भवत्यान्यसुतो धार्य्यः उत्सृजैनं अलमलमतिधार्ष्ट्येनेति। सा च तेनैवमुक्ता पतिव्रता भर्त्तृवचनात्तमिषीकास्तम्बे गर्भमुत्ससर्ज। स चोत्सृष्टमात्र एवातितेजसा देवानां तेजांस्याचिक्षेप। वृहस्पतिमिन्दुञ्च तस्य कुमारस्यातिचारुतया साभिलाषौ दृष्ट्वा देवा. समुत्पन्नसन्देहास्तारां पप्रच्छुः। सत्यं कथयास्माकमतिसुभगे। कस्यायमात्मजः सोमस्याथ वृहस्पतेरित्युक्तापि सा तारा ह्रिया न किञ्चिदुवाच। बहुशोऽप्यभिहिता यदासौ देवेभ्यो नाचचक्षे ततः स कुमारस्तां शप्तुमुद्यतः प्राह च। दुष्टाम्ब। कस्मान्मम तातं नाख्यासि। अद्यैव ते अलीकलज्जावत्यास्तथा शास्तिमहमहं करोमि। यथा नैवमन्याप्यतिमन्थरवचना भविष्यतीति। अथ भगवान् पितामहस्तं कुमारं सन्निवार्य्य स्वयमपृच्छत्ताराम्। कथय वत्से। कस्यायमात्मजः सोमस्याथ वृहस्पतेरित्येवमुक्ता लज्जाजड़माह सोमस्येति। ततः स्फुरदुच्छूसितामलकपोलकान्तिर्भगवानुडुपतिरालिङ्ग्य कुमारं साधु साधु वत्स। प्राज्ञोऽसीति बुध इति नाम चक्रे। इति विष्णुपुराणे ४ अंशे ६ अध्याय.॥ मत्स्यपुराणे चतुर्विंशाध्याये विशेषश्चायम्।
सूत उवाच।
"ततः संवत्सरस्यान्ते द्वादशादित्यसन्निभः।
दिव्यपीताम्बरधरः पीताभरणभूषितः॥
सर्व्वार्थशास्त्रविद्विद्वान् हस्तिशास्त्रप्रवर्त्तकः।
राज्ञः सोमस्य पुत्रत्वाद्राजपुत्रो बुधः स्मृत.॥
जातमात्रः स तेजांसि सर्व्वाण्येवाभ्यपद्यत।
ब्रह्माद्यास्तत्र ते जग्मुर्देवा देवर्षिभिः सह॥
वृहस्पतिगृहे सर्व्वे जातकर्म्मोत्सवं तदा।
पप्रच्छुश्च सुरास्तारां केन जातः कुमारक॥
तत. सा लज्जिता तेषां न किञ्चिदवदत्तदा।
पुनः पुनस्तदा पृष्टा लज्जयन्ती वराङ्गना॥
सोमस्येति चिरादाह ततोऽगृह्णाद्विधु. सुतम्।

बुन्द, इर् ञ उ निशामने। (इति कविकल्पद्रुमः। (भ्वा० उभ०-सक०-सेट्।) पञ्चमस्वरी। इर् अबुन्दीत्। ञ बुन्दति बुन्दते। निशामनमालोचन प्रणिधानमिति यावत्। इति दुर्गादासः॥ (यथा, भट्टिः। १४। ७२।
"ससंसे शरवर्षेण दिव्येनेति बुबुन्द सः॥")
बुध, इर् ञ उ निशामने। इति कविकल्पद्रुम॥ (भ्वा०-उभ०-सक०-सेट्।) पञ्चमस्वरी। इर् अबुधत् अबुन्धीत्। ञ बुन्धति बुन्धते। उ बुन्धित्वा बुद्धा। निशामनमालोचन प्रणिधानमिति यावत्। इति दुर्गादासः॥
बुन्ध, क बन्धे। इति कविकल्पद्रुमः॥ (चुरा०-पर०-सक०-सेट्।) पञ्चमस्वरी। क बुन्धयति॥ इति दुर्गादासः॥
बुबुधानः, पुं, आचार्य्यः। देवः। पण्डितः। इति संक्षिप्तसारोणादिवृत्तिः॥ (यथा, ऋग्वेदे। ७। ४४। ३।
"दधिक्रावाण बुबुधानो
अग्निमुपब्रुव उषसं सूर्य्यं गाम्॥")
बुभुक्षा, स्त्री, (भोक्तुमिच्छा। भुज पौ भक्षे + "धातोः कर्म्मणः समानकर्तृकादिच्छायां वा।" ३।१।७। इति सन्। ततः "अः प्रत्ययात्।" ३।३।१०२। इत्यस्ततष्टाप्।) क्षुधा। इत्यमरः। २।९।५४॥ (यथा, रामायणे। २। २८। १८।
"अतीववातस्तिमिर बुभुक्षा चास्ति नित्यशः। भयानि च महान्त्यत्र ततो दुःखतरं वनम्॥")
बुभुक्षितः, त्रि, (बुभुक्षा भोजनेच्छा सञ्जातास्य। बुभुक्षा + "तदस्य संजातं तारकादिभ्य इतच्।" ५।२।३६। इति इतच्।) क्षुधितः। इत्यमरः। ३।१।१०॥ (यथा, मनुः। १०।१०५।
"अजीगर्त्तः सुतं हन्तुमुपासर्पद्बुभुक्षितः। न चालिप्यत पापेन क्षुत्प्रतीकारमाचरन्॥")
बुल, क मज्जने। इति कविकल्पद्रुमः॥ (चुरा०-पर०-अक०-सेट्।) क बोलयति प्रस्तरः पयसि। तालव्यवर्गाद्यादिरयमिति केचित्। इति दुर्गादासः॥
बुलि, स्त्री, (बुल + इन् किच्च।) भगम्। इति हेमचन्द्रः। ३।२७३।
बुषं, क्ली, (बुस्यते उत्सृज्यते यत्। बुसिर् उत्सर्गे + "इगुपधेति।" ३।१।१३५। इति कः। पृषोदरादित्वात् षत्वं विभाषया।) बुसम्। तुच्छधान्यम्। आगड़ा इति भाषा। यथा,—
"उक्षेषमेषतुषतोयभषाभिलाषकुल्यायमाषबुषवेषतुषाररोषाः। इति मूर्द्धन्यमध्ये पुरुषोत्तमः।" इति भरतः॥
बुस, य इर् त्यागे। इति कविकल्पद्रुमः। (दिवा०-पर०-सक०-सेट्।) य बुस्यति जलं मेघः त्यजतीत्यर्थः। इर् अबुसत् अबोसीत्। अस्मात् पुषादित्वान्नित्य ङ इत्यन्ये। इति दुर्गादासः॥
बुस, क्ली, (बुस्यते तुच्छत्वादुत्सृज्यते इति। बुस इर् उत्सर्गे + "इगुपधज्ञाप्रीकिरः कः।" ३।१।१३५। इति कः।) तुच्छधान्यम्। आगड़ा इति भाषा। तत्पर्य्यायः। कड़ङ्गरः २। इत्यमरः। २।९।२२॥ बुषम् २। इति भरतः॥ बूषम् ४। इति शब्दरत्नावली॥ (उदकम्। यथा, ऋग्वेदे। १०। २७। २४।
"आविः स्वः कृणुते गूहते बुसम्॥"
"बुससुदकम्॥" इति सायनः॥)
बुस्त क अनादरे। आदरे। इति कविकल्पद्रुमः॥ (चुरा०-पर०-सक०-सेट्।) क बुस्तयति खलं लोकः। बुस्तयति धीरं साधुः। इति दुर्गादासः॥
बुस्तं, क्ली, (बुस्यते अनाद्रियते यत्। बुस्त क अनादरे + घञ्। यद्वा बुस्यते त्यज्यते स्म इति। बुसइर उत्सर्गे कर्म्मणि क्तः।) मांसपिण्डकविशेषः। स्थालीभृष्टमांसम्। पनसादिफलस्यासारभागः। इत्यमरभरतौ॥ भोँता इति ख्यातः॥
बूक्कं, त्रि, (बुक्कयति शब्दायते इति। बुक्क + अच्। पृषोदरादित्वाद्दीर्घः।) बुक्कम्। हृदयम्। इत्यमरटीकायां रमानाथः॥
बृक्कं, त्रि, (बुक्कयति शब्दायते इति। बुक्क + अच्। पृषोदरादित्वादृकारः।) बुक्कम्। इत्यमरटीकायां सारसुन्दरी॥
बृ गि हृत्याम्। भृत्याम्। इति कविकल्पद्रुमः॥ (स्वादि, क्र्यादि०-पर०-सक०-सेट्।) गि बृणोति बूर्णः बूर्णिः। इति दुर्गादासः॥
बेकटः, पुं, मत्स्यभेदः। तरुणः। विदूषकः। इति शब्दरत्नावली॥
बोकड़ी, स्त्री, वस्त्रान्त्री। इति राजनिर्घण्टः॥
बोद्धा, त्रि, (बुध्यते यः। बुध् + तृच्।) बोधकर्त्ता। यथा,—
"बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः। अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम्॥"
इति भर्तृहरिः॥
बोधः, पुं, (बोधनमिति। बुध् + भावे घञ्।) ज्ञानम्। इति त्रिकाण्डशेषः॥ (यथा मार्कण्डेये। २६। १।
"वर्द्धमानं सुतं सा तु राजपत्नी दिने दिने। तमुल्लापादिना बोधमनयन्निर्म्ममात्मकम्॥"
अयं हि बुद्धेर्जातः। तथाहि मार्कण्डेये। ५०।२७।
"बोधं बुद्धिस्तथा लज्जा विनयं वपुरात्मजम्। व्यवसाय प्रजज्ञे वै क्षेमं शान्तिरसूयत॥"
ऋषिविशेषः। यथा मार्कण्डेये। ७६। २८।
"तयात्र सक्तो हैमिन्या गृहीत्वा च सुवर्च्चसा। बोधस्य द्विजमुख्यस्य गृहे नीतवती पुनः॥"
रूपभेदः। यथा, मार्कण्डेये। १०१। १६।
"बोधश्चावगतिश्चैव स्मृतिर्विज्ञानमेव च। इत्येतानीह रूपाणि तस्य रूपस्य भास्वतः॥"
जागरणकालः। चैतन्यम्। यथा, मार्कण्डेये। ८१। ६७।
"प्रबोधञ्च जगत्स्वामी नीयतामच्युतो लघु। बोधश्च क्रियतामस्य हन्तुमेतौ महासुरौ॥")
बोधकः, पुं (बोधयतीति। बुध् + णिच् + ण्वुल्।) सूचकः। इति शब्दमाला॥ पुस्तकान्तरे बाधकोऽपि पाठः। बोधजनके त्रि॥ (यथा, साहित्यदर्पणे। २। ४।
"वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः॥")
बोधकरः, पुं, (करोतीति करः। कृ + ट। बोधस्य प्रबोधस्य करः।) निशान्ते बोधकारकः॥ तत्पर्य्यायः। वैतालिकः २। इत्यमरः। २।८।९७॥
बोधज्ञः, पुं, (बोधं अभिप्रायं जानातीति। बोध + ज्ञा + क।) अभिप्रायवेत्ता। श्रीकृष्णः। यथा,—
"सर्व्वभावविदां श्रेष्ठो बोधज्ञः कामशास्त्रवित्। कामिनीं बोधयामास वासयामास वक्षसि॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ५३ अध्यायः॥
बोधनं, क्ली, (बुध + णिच् + ल्युट्।) गन्धदीपनम्। इति मेदिनी। ने, ९९॥ वेदनम्। विज्ञापनम्। इति बुधधात्वर्थदर्शनात्॥ (उद्दीपनम्। यथा माघे। ९। ६४।
"समयेन तेन चिरसुप्तमनो-
भवबोधनं सममबोधिषत॥"
"मनोभवस्य कामस्य बोधनं उद्दीपनं यस्मिन्।" इति तट्टीकायां मल्लिनाथः। ज्ञानम्। यथा, रघौ। ९। ४९।
"परिचय चललक्ष्यनिपातने
भयरुषोश्च तदिङ्गितबोधनम्॥"
"तेषां चललक्ष्याणां इङ्गितस्य चेष्टितस्य भयादिलिङ्गभूतस्य बोधन ज्ञानं च करोति।" इति तट्टीकायां मल्लिनाथः॥) दुर्गाया बोधन यथा। देवीपुराणे।
"इषे मास्यसिते पक्षे कन्याराशिगते रवौ। नवम्यां बोधयेद्देवीं क्रीड़ाकौतुकमङ्गलैः॥"
अत्र कृष्णादित्वादिषे इत्यपि गौणाश्विनपरम्। अतएव कालकौमुद्यादिधृतम्। यथा,—
"कर्किण्यर्के हरौ सुप्ते शक्रध्वजक्रियाश्विने। तुलायां बोधयेद्देवीं वृश्चिके तु जनार्द्दनम्॥"
इति॥
बोधयेदिति शेषः। तत्रापि नवमीबोधनं कन्यायामेव तथैव सम्भवात् तेन सिंहार्के तुलार्केऽप्याश्विनत्वेन वाक्यरचना। एवं प्रतिवर्षं कर्त्तव्यत्वादार्द्रादिनक्षत्राभावेऽपि बोधनादिकार्य्यम्। नक्षत्रयोगस्तु फलातिशयाय। तथा च लिङ्गपुराणम्।
"मूलाभावेऽपि सप्तम्यां केवलायां प्रवेशयेत्। तथा तिथ्यन्तरेष्वेवमृक्षेषु च फलोच्चयः॥"
यथाह देवलः।
"तिथिनक्षत्रयोर्योगे द्वयोरेवानुपालनम्। योगाभावे तिथिर्ग्राह्या देव्याः पूजनकर्म्मणि॥"
कृष्णनवम्यामार्द्रायोगो विधौ मन्त्रे च श्रूयते। तथा च लिङ्गपुराणम्।
"कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रभे दिवा। नवम्यां बोधयेद्देवीं महाविभवविस्तरैः॥"
चतुर्थपादे गीतवादित्रनिःस्वनैरिति कालिकापुराणे पाठः।
"इषे मास्यसिते पक्षे नवम्यामार्द्रयोगतः।

श्रीरुद्रे बोधयामि त्वां यावत् पूजां करोम्यहम् ॥
ऐन्द्रे रावणस्य वधार्थाय रामस्यानुग्रहाय च ।
अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः पुरा ॥"
इति मन्त्रलिङ्गम् ॥
अकाल इति तु रात्रित्वेन दक्षिणायनस्य । तथाच श्रुतिः । तपस्तपस्यौ शैशिरावृतू, मधुश्च माधवश्च वासन्तिकावृतू, शुक्रश्च शुचिश्च ग्रैष्मावृतू । अथैतदुत्तरायणं देवानां दिनं नभाश्च नभस्यश्च वार्षिकावृतू इषश्चोर्ज्जश्च शारदावृतू सहाश्च सहस्यश्च हैमन्तिकावृतू । अथैतद्दक्षिणायनं देवानां रात्रिरिति । एतच्च ।
रात्रावेव महामाया ब्रह्मणा बोधिता पुरा ।
तथैव च नराः कुर्युः प्रतिसम्वत्सरं नृपेत्येत ह्रिवचनम् ॥ अतएव लिङ्गपुराणकालिकापुराणयोर्द्दिवेत्युक्तम् । एतच्च कालिकापुराणे बोधने रात्राविति पदं दैवरात्रिपरम् । ततश्च पूर्व्वाह्णे नवम्यामार्द्रायुक्तायां बोधनं पूर्व्वाह्णेतरकाल एव चार्द्रालाभे द्वितीयत्र दिवापदश्रवणादपि बोधनं अन्यथा दिवापदं व्यर्थं स्यात् । ज्योतिषार्णवे त्वत्रसूक्तं वराहेण ।
"कन्यादिमीनपर्य्यन्तं यत्र सम्प्राप्यते शिवः ।
तत्र बोधः प्रकर्त्तव्यो देव्या राज्ञां शुभप्रदः ॥"
शिवः आर्द्रा । एवञ्चोभयदिने पूर्व्वाह्णे नवमीलाभे परत्रार्द्रालाभे परत्र बोधनं न तु युग्मात् पूर्व्वत्र । युग्मबाधकपूर्व्वाह्णस्य बाधकनक्षत्रानुरोधात् दिवा नक्षत्रालाभे तु पूर्व्वाह्ण एव नवम्यां उभयत्र पूर्व्वाह्णलाभे पूर्व्वदिन एव युग्मात् । अत्र केवलनवम्यां बोधनविधेर्नक्षत्रस्यापि गुणफलत्वाच्च ।
"माघेऽथ फाल्गुने वापि भवेद्दै माघसप्तमी ।
माकरीति च यत्प्रोक्तं तत्प्रायोवृत्तिदर्शनात् ॥"
इति ॥
सौरमासात् माकर्य्यादिवत् आर्द्रायोग इत्यस्य प्रायिकत्वेनाभिधानं प्रतीयते । ततश्चार्द्रारहितबोधने मन्त्रान्तरानुपदेशात् तन्मन्त्रः प्रणवयुक्तत्वेन प्रयुज्यते ।
"यन्न्यूनञ्चातिरिक्तञ्च यच्छिद्रं यदयज्ञियम् ।
यदमेध्यमशुद्धञ्च यातयामञ्च यद्भवेत् ।
तदोङ्कारप्रयुक्तेन सर्व्वञ्चाविकलं भवेत् ॥"
इति योगियाज्ञवल्क्यात् षष्ठ्यां बोधनेऽप्येवम् ॥
नवमीबोधनासामर्थ्ये तु षष्ठ्यां सायं बोधनम् । तथा भविष्ये ।
"षष्ठ्यां बिल्वतरौ बोधं सायंसन्ध्यासु कारयेत् ॥"
सन्ध्योक्ता वराहेण ।
"अर्द्धास्तमयात् सन्ध्या व्यक्तीभूता न तारका यावत् ॥"
षष्ठ्यां बोधने तु प्रागुक्त ऐन्द्रे रावणस्य वधार्थायेति अहमप्याश्विने षष्ठ्यां सायाह्ने बोधयाम्यत इति पठेत् । यदा तु पूर्व्वदिने सायं षष्ठीलाभः परदिने सायं विना षष्ठीलाभः तदा पूर्व्वेद्युर्बोधनं परदिने सायमामन्त्रणम् । यदा तूभयदिने सायं षष्ठीलाभस्तदा परेऽहनि पूर्व्वाह्णे षष्ठ्यां बोधनम् ।
"बोधयेद्बिल्वशाखायां षष्ठ्यां देवीं फलेषु च ।
षष्ठ्यां बोधने तु तच्छाखानुपदेशात् सदादरः ॥"
इति तिथ्यादितत्त्वम् ॥

**बोधनी**, स्त्री, ( बुध् + भावे ल्युट् । ङीप् । बोधः । ( बोध्यतेऽनया । बुध् + णिच् + करणे ल्युट् । अनया हि मूर्च्छितो बोध्यते अतोऽस्य तथात्वम् ।) पिप्पली । इति मेदिनी ॥ (बुध्यतेऽस्याम् । बुध् + अधिकरणे ल्युट् । स्त्रियां ङीप् । अस्यां हि योगनिद्राया हरेः प्रबोधनात्तथात्वम् । ) कार्त्तिकशुक्लैकादशी । या तु उत्थानैकादशी । यथा,—
"शयनीबोधनीमध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन ॥"
इति तिथ्यादितत्त्वम् ॥
अपि च ।
"तावद्गर्ज्जन्ति तीर्थानि वाजिमेधादयो मखाः ।
मथुरायां प्रिया विष्णोर्यावन्नायाति बोधनी ॥"
इति हरिभक्तिविलासे पद्मपुराणवचनम् ॥

**बोधनीय**, त्रि, ( बुध् + कर्म्मणि अनीयर् । ) बोध्यः । बोधितव्यः । बोधयोग्यः ॥

**बोधवासरः**, पुं, ( बोधस्य भगवतो मायानिद्रायाः प्रबोधस्य वासरः । ) भगवत्प्रबोधदिनम् । उत्थानैकादशी । यथा,—
"जन्मप्रभृति यत् पुण्यं नरेणोपार्जितं भुवि ।
वृथा भवति तत् सर्व्वं न कृत्वा बोधवासरम् ॥"
इति हरिभक्तिविलासधृतस्कन्दपुराणवचनम् ॥

**बोधान**, पुं, ( बुध्यते इति । बुध् + आनच् । ) गीष्पतिः । विज्ञः । बुधभेदः । इति शब्दरत्नावली ॥

**बोधिः**, पुं, ( बुध + "सर्व्वधातुभ्य इन् ।" ४।११७। इति इन् । ) समाधिभेदः । पिप्पलवृक्षः । इति मेदिनी । धे, ११ ॥ ( यथास्य पर्य्यायः ।
"पिप्पली बोधिरश्वत्थश्चैत्यवृक्षो गजाशनः ॥"
इति वैद्यकरत्नमालायाम् ॥)
बोधः । इति त्रिकाण्डशेषः ॥ ज्ञातरि, त्रि । इत्युणादिकोषः ॥

**बोधित**, त्रि, ( बुध् + णिच् + क्त । ) ज्ञापितम् । यथा,—
"रात्रावेव महामाया ब्रह्मणा बोधिता पुरा ॥"
इति तिथ्यादितत्त्वम् ॥

**बोधितरुः**, पुं, ( बोधिरेव तरुः । ) अश्वत्थवृक्षः । इति हेमचन्द्रः । ४ । १९७ ॥ ( गुणादयोऽस्याश्वत्थशब्दे ज्ञातव्याः ॥ )

**बोधितव्य**, त्रि, ( बुध + णिच + तव्य । ) ज्ञापितव्यम् । यथा । बोधितव्योऽयं पूर्व्वपक्षः । इति शाङ्करभाष्यम् ॥

**बोधिद्रुमः**, पुं, ( बोधिरेव द्रुमः । ) अश्वत्थवृक्षः । इत्यमरः । २ । ४ । २० ॥

**बोधिवृक्षः**, पुं, ( बोधिरेव वृक्षः । ) अश्वत्थवृक्षः । इति राजनिर्घण्टः ॥

**बोधिसत्त्वं**, क्ली, ( बोधि बोधवत् सत्त्वम् । ) बुद्धविशेषः । इति हेमचन्द्रः । २ । १४६ ॥ (यथा, कथासरित्सागरे । ७२ । ६५ ।
"दयाशुर्बोधिसत्त्वांशः कोऽप्यभूज्जीमूतवाहनः ।
शक्रयाद्दर्थिसात् कर्तुमपि कल्पद्रुमं कृती ॥")

**बौद्ध**, क्ली, ( बुद्धेन प्रणीतम् । बुद्ध + अण् । ) बुद्धकृतनिरीश्वरशास्त्रम् । तत् सर्व्वं शास्त्रकारैः गर्हितं अग्राह्यम् । इति श्रीभागवतम् । बौद्धशास्त्रसंस्थापनकर्त्ता बृहस्पतिः । यथा,—
"प्राह वाचस्पतिं देवं पौरोहित्येऽपि दत्ते सुते ।
न यज्ञभागो राज्ये मे निर्जितश्च बृहस्पते ॥
राज्यलाभाय मे यत्नं विधत्स्व धिषणाधिप ॥
ततो बृहस्पतिः शक्रमकरोद्बलदर्पितम् ।
ग्रहशान्तिविधानेन पौष्टिकेन च कर्म्मणा ॥
गत्वाथ मोहयामास रजिपुत्त्रान् बृहस्पतिः ।
जिनधर्म्मं समास्थाय वेदबाह्यं स वेदवित् ॥
वेदत्रयीपरिभ्रष्टांश्चकार धिषणाधिपः ।
वेदबाह्यान् परिज्ञाय हेतुवादसमन्वितान् ।
जघान शक्रो वज्रेण सर्व्वधर्म्मबहिष्कृतान् ॥"
इति मात्स्ये २४ अध्यायः ॥
( बौद्धदर्शनं यथा, सर्व्वदर्शनसंग्रहे । "अत्र बौद्धैरभिधीयते यदभ्यधायि अविनाभावो दुर्बोध इति तदसाधीयः तादात्म्यतदुत्पत्तिभ्यामविनाभावस्य सुज्ञानत्वात् । तदुक्तम्,
"कार्य्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।
अविनाभावनियमो दर्शनान्तरदर्शनात् ॥"
इति ।
अन्वयव्यतिरेकाविनाभावनिश्चायकाविति पक्षे साध्यसाधनयोर्व्यभिचारो दुरवधारणो भवेत् भूते भविष्यति वर्त्तमाने अनुपलभ्यमानेऽपि व्यभिचारशङ्काया अनिवारणात् । ननु तथाविधस्थले तावकेऽपि मते व्यभिचारशङ्का दुष्परिहरेति चेत् नैवं वोचः विनापि कारणं कार्य्यमुत्पद्यतामित्येवंविधायाः शङ्कायाः व्याघातावधिकतया निवृत्तत्वात् । तदेव ह्याशङ्क्येत यस्मिन्नाशङ्क्यमाने व्याघातादयो नावतरेयुः तदुक्तं व्याघातावधिराशङ्केति । तस्मात्तदुत्पत्तिनिश्चयेन अविनाभावो निश्चीयते तदुत्पत्तिनिश्चयश्च कार्य्यहेत्वोः प्रत्यक्षोपलम्भानुपलम्भपञ्चकनिबन्धनः । कार्य्यस्योत्पत्तेः प्रागनुपलम्भः कारणोपलम्भे सत्युपलम्भः उपलब्धस्य पश्चात् कारणानुपलम्भादनुपलम्भ इति पञ्चकारण्या धूमधूमध्वजयोः कार्य्यकारणभावो निश्चीयते तथा तादात्म्यनिश्चयेनाप्यविनाभावो निश्चीयते यदि शिंशपा वृक्षत्वमतिपतेत् स्वात्मानमेव जह्यादिति विपक्षे बाधकप्रवृत्तेः अप्रवृत्ते तु बाधके भूयः सहभावोपलम्भेऽपि व्यभिचारशङ्कायाः को निवारयिता । शिंशपावृक्षयोश्च तादात्म्यनिश्चयो वृक्षोऽयं शिंशपेति सामानाधिकरण्यबलादुपपद्यते । न ह्यत्यन्ताभेदे तत् सम्भवति पर्य्यायत्वेन युगपत्प्रयोगायोगात् नाप्यत्यन्तभेदे गवाश्वयोरनुपलम्भात् । तस्मात्

"मूर्च्छा मधुरसा देवी मोरटा तेजनी सुवा।
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥)

मोषक, पुं (मुष्णातीति। मुष्+ण्वुल्।) तस्करः। इत्यमरः। २। १०। २४॥

मोषण, क्ली, लुण्ठनम्। छेदनम्। वधः। इति मुषधातोर्भाविऽनट्। (ल्युट्॥) मुष्णातीति। मुष्+ल्युः। अपहारके, त्रि। यथा, भागवते। ५।२४।२२। "न वै भगवान् नूनममुष्यानुजग्राह यदुत पुनरात्मानुस्मृतिमोषणं मायामयभोगैश्वर्य्यमेवातनुतेति॥")

मोषिता, [ऋ] त्रि, मोषणकर्त्ता। चौरः। इति मुषधातोस्तृन्प्रत्ययेन निष्पन्नः॥

मोह, पुं, (मोहनमिति। मुह्+भावे घञ्।) मूर्च्छा। इत्यमरः। २।८।१०८॥ (यथा उत्तररामचरिते ३ अङ्के।
"वीचिवातैः शीकरक्षोदशीतै-
राकर्षद्भिः पद्मकिञ्जल्कगन्धान्।
मोहे मोहे रामभद्रस्य जीवं
स्वैरं स्वैरं प्रेरितैस्तर्पयेति॥"
अस्य विषयो यथा,—
"सन्नावहासु नाडीषु पिहितास्वनिलादिभिः।
तमोऽभ्युपैति सहसा सुखदुःखव्यपोहकृत्॥
सुखदुःखव्यपोहाच्च नरः पतति काष्ठवत्।
मोहो मूर्च्छेति तां प्राहुः षड्विधा सा प्रकीर्त्तिता॥"
इति सुश्रुते उत्तरतन्त्रे ४६ अध्याये॥)
अविद्या। इति मेदिनी। हे, ७॥ दुःखम्। इति शब्दरत्नावली॥ देहादिषु आत्मबुद्धिः। इति गीतासुबोधिन्यां श्रीधरस्वामी॥ अस्य ब्रह्मणो बुद्धितो जातः। यथा,—
"बुद्धेर्मोहः समभवदहङ्कारादभून्मदः।
प्रमोदश्चाभवत् कण्ठान्मृत्युर्लोचनतो नृप।॥"
इति मात्स्ये ३ अध्याय.॥
मोहस्वरूपं यथा,—
"मम माता मम पिता ममेयं गृहिणी गृहम्।
एतदन्यं ममत्वं यत् स मोह इति कीर्त्तितः॥"
इति पाद्मे क्रियायोगसारे १६ अध्यायः॥
धर्म्मविमूढत्वम्। यथा,—
"अकामतः कृतं पापं वेदाभ्यासेन नश्यति।
कामतस्तु कृतं मोहात् प्रायश्चित्तैः पृथग्विधैरिति॥"
ननु मोहादिति को मोहः। अत्र।
"मोहशब्देन देवेन्द्र। बुद्धिपूर्व्वो व्यतिक्रमः।
उच्यते पण्डितैर्नित्यं पुराणे चाग्निपायन॥"
इति भविष्यपुराणवचनात् ज्ञातबुद्धिपूर्व्वो व्यतिक्रमो मोहः। इति विवेकः। तन्न कामनासामर्थ्यादेव बुद्धिलब्धत्वात्। उच्यते। मूढस्य न्यायार्थो मोहादज्ञाच्छतः इत्यादौ सह वैविध्ये इति प्रत्ययानुसारात् अज्ञानमात्रं मोहः। यत्र तु कामनाशब्दोऽस्ति तत्र भविष्यपुराणोक्तविशेषोमोहशब्दो न ग्राह्यः। किन्तु धर्म्मविमूढत्वं मोहः स चाधर्म्मबुद्धौ सत्यामप्यकर्त्तव्ये रागात् कर्त्तव्यताभ्रमः। यथा, व्यासः।
"मोहो धर्म्मविमूढत्वं मानस्त्वात्माभिमानिता।"
एवञ्च भविष्यपुराणीयबुद्धिशब्दोऽप्यधर्म्मज्ञानमेवाभिधत्ते सत्यधर्म्मज्ञाने पापगौरवार्थमिदमुक्तं मोहादिति। इति प्रायश्चित्तविवेकः॥
मोहवृक्षो यथा,—
सुमनोवाच।
"श्रूयतामभिधास्यामि सर्व्वसन्देहनाशनम्।
स्वरूपमुपदेशस्य सर्व्वविज्ञानदर्शनम्॥
लोभः पापस्य बीजोऽयं मोहो मूलञ्च तस्य हि।
असत्यं तस्य च स्कन्धो माया शाखासुविस्तरः।
दम्भकौटिल्यपत्राणि कुबुद्ध्या पुष्पितः सदा।
पैशुन्यं तस्य सौगन्ध्यमज्ञानं फलमेव हि॥
छद्मपाषण्डचौराश्च क्रूराः क्रूराश्च पापिनः।
पक्षिणो मोहवृक्षस्य मायाशाखां समाश्रिताः॥
अज्ञानन्तु फलं तस्य रसोऽधर्म्मफलस्य हि।
भावोदकेन संवृद्धस्तस्य सत्तातः स तु प्रियः॥
अधर्म्मस्तस्य सुरभिः स्नेहश्च मधुरायते।
तादृशैश्च फलैस्त्वेव सुफलो लोभपादपः॥
तस्य च्छायां समाश्रित्य यो नरः परिवर्त्तते।
फलानि तस्य योऽश्नाति सुपक्वानि दिने दिने॥
फलानान्तु रसेनैव अधर्म्मेण तु पोषितः।
सुसपुष्टो भवेन्मर्त्यः पतनाय प्रयच्छति॥"
इति पाद्मे भूमिखण्डे ११ अध्यायः॥

मोहन, क्ली, (मुह्यतेऽनेनेति। मुह्+ल्युट्।) सुरतम्। इति हेमचन्द्रः। ३। २००॥ यथा, मार्कण्डेये। ५१। ७७।
"प्रविश्य गर्भमन्योऽको मुक्ता मोहयतेऽपरा।
जायन्ते मोहनात्तस्याः सत्त्वमण्डूककच्छपाः॥")
होममन्त्रौषध्यादिद्वारासुम्भताकरणम्। तत्र होमेऽङ्गुलिनियमो यथा,—
"मोहनं वश्यकामश्च प्रीतिसंवर्द्धनं तथा।
प्रदेशिनीकनिष्ठाभ्यां सर्व्वमेतत् प्रसिध्यति॥
मारणाकर्षणञ्चैव क्षोभणोच्चाटनं तथा।
कनिष्ठामध्यमाङ्गुष्ठसंयोगेन तु लीलया॥
विधियुक्तेन होमेन तथा न्यासानुयोगतः।
सर्व्वे मन्त्राः प्रसिध्यन्ति मुद्रामन्त्रप्रयोगतः॥"
इति तन्त्रसारः॥
(नगरभेदः। यथा, महाभारते। २।२५३।८।
"मोहनं पत्तनञ्चैव त्रिपुरां कोशलां तथा।
एतान् सर्व्वान् विनिर्जित्य करमादाय सर्व्वशः॥")

मोहन, पुं, (मोहयतीति। मुह्+णिच्+ल्युः।) धुस्तूरवृक्षः। इति राजनिर्घण्टः॥ कामदेवस्य पञ्चबाणान्तर्गतबाणविशेषः। इति त्रिकाण्डशेषः॥ (यथा, कथासरित्सागरे। ७१। १३२।
"कामस्येव जगज्जैत्रमोहनास्त्राधिदैवतम्।
तद्रूपमद्भुतदिशाभूत् समाधिस्येव तत्क्षणम्॥"
नृपविशेषः। यथा, कथासरित्सागरे। ४७।६१।
"वीक्ष्य प्रसन्नं निहतं मोहनो नाम भूपतिः।
सन्निपत्याद्रवाहत तं ताडयामास सायकैः॥"
मोहकारके, त्रि। यथा, गीतायाम्। १८।३९।
"यदग्रे चानुबन्धे च सुखं मोहनमात्मनः।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम्॥"
"अत्र मोहनं मोहकरम्।" इति आनन्दगिरिः॥)

मोहनभोग., पुं, (मोहनश्चासौ भोगश्चेति।) समिताशर्करादृतादियुक्तमिष्टान्नविशेषः। इति भाकराजेश्वरः॥

मोहना, स्त्री, (मोहयति पुष्पैरिति। मुह्+ल्युः। टाप्।) त्रिपुरमालीपुष्पम्। इति रत्नमाला॥ मरुन्माला। इति शब्दमाला॥

मोहनी, स्त्री, (मुह्यत्यनयेति। मुह्+ल्युट्। स्त्रियां ङीप्।) उपोदकी। इति राजनिर्घण्टः॥ वटपत्री। इति भावप्रकाशः॥ (तथास्याः पर्य्यायः।
"मोहनी मल्लिकाख्या तु वटपत्रा च मोहना।"
इति वैद्यकरत्नमालायाम्॥)
माया। यथा, महाभारते। १४। ८०। ४५।
"मया तु मोहनी नाम मायैषा सम्प्रदर्शिता॥")

मोहरात्रि, स्त्री, (मोहस्य रात्रिः।) दैनन्दिनप्रलयः। यथा,—
"एवं पञ्चाशदब्दे च गते तु ब्रह्मणो नृप।।
दैनन्दिनन्तु प्रलयं वेदेषु परिकीर्त्तितम्॥
मोहरात्रिश्च सा प्रोक्ता वेदविद्भिः पुरातनैः।
तत्र सर्व्वे प्रनष्टाश्च चन्द्रार्कादिदिगीश्वराः॥
आदित्या वसवो रुद्रा मनवश्च मानवादयः।
ऋषयो मुनयश्चैव गन्धर्व्वा राक्षसादयः॥
मार्कण्डेयो लोमशश्च पेचकश्चिरजीविनः।
इन्द्रद्युम्नश्च नृपतिश्चाकूपारश्च कच्छपः।
नाडीजङ्घो वकश्चैव सर्व्वे नष्टाश्च तत्र वै॥
ब्रह्मलोकादधः सर्व्वे लोका नागालयास्तथा।
ब्रह्मलोकं ययुः सर्व्वे ब्रह्मलोकादधस्तथा॥
गते दैनन्दिने ब्रह्मा लोकांश्च सृजते पुनः।
एवं शताब्दपर्य्यन्तं परमायुश्च ब्रह्मणः॥
ब्रह्मणश्च निपातेन महाकल्पो भवेन्नृप।।
प्रकीर्त्तिता महारात्रिः सा एव च पुरातनैः।"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे। ५४।७२—७८॥
मोहः कर्त्तव्याग्रहः स एव रात्रिरिव रात्रिः बुद्धिमोहकत्वान्निद्रारूपा। इदानीन्तनजनानां रात्रिरिति वा। इति देवीमाहात्म्यटीकायां विद्याविनोदः॥ जन्माष्टमीरात्रिः। यथा,—
"दीपोत्सवचतुर्द्दश्याममया योग एव चेत्।
कालरात्रिर्महेशानि। ताराकालीप्रियङ्करी।
जन्माष्टमी महेशानि। मोहरात्रिः प्रकीर्त्तिता॥
तृतीया माधवे शुक्ला कुलवारर्क्षसंयुता।
दारुणा कीर्त्तिता देवि। सर्व्वसिद्धीश्वरी परा॥"
इति शक्तिसङ्गमतन्त्रम्॥

मोहशास्त्र, क्ली, (मोहोत्पादकं शास्त्रमिति मध्यपदलोपिकर्म्मधारयः।) अविद्याजनकग्रन्थः। यथा,—
"गोपतिं प्राह विप्रेन्द्रानालोक्य भगवान् हरिः।

न वेदवाह्यपुरुषे पुण्यलेशोऽपि शङ्कर ।॥
मङ्गच्छते महादेव । धर्म्मो वेदाद्धि निर्ब्बभौ ।
'तथापि भक्तवात्सल्यादृक्षितया महेश्वर ।॥
अस्माभि. सर्व्व एवैमे गन्तारो नरकानपि ।'
अस्मादे वेदवाह्यानां रक्षणाय च पापिनाम् ।
विमोहनाय शास्त्राणि करिष्यावो वृषध्वज ।॥
एव सम्बोधितो रुद्रो माधवेन सुरारिणा ।
चकार मोहशास्त्राणि केशवोऽपि शिवेरित: ॥
कापाल नाकुल वाम भैरव पूर्व्वपश्चिमम् ।
पञ्चरात्र पाशुपत तथान्यानि सहस्रश. ॥"
इति कौर्म्मे १४ अध्याय: ॥

मोहिनी, स्त्री, ( मोहयति सौन्दर्य्यादिनेति । मुह + णिच् + णिनि: । स्त्रियां ङीप् । ) त्रिपुरमालीपुष्पम् । इति रत्नमाला ॥ ( वटपत्री । तत्पर्य्यायो यथा —
"वटपत्री तु कथिता मोहिनी रेचनी बुधै ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
समुद्रमन्थनकाले देवानाममृतपानायासुराणां मोहनाय च भगवदवतारविशेष. । यथा,—
"षान्वन्तरं द्वादशमं त्रयोदशममेव च ।
अपाययत् सुरानन्यान् मोहिन्या मोहयन् स्त्रिया ॥"
इति श्रीभागवते १ स्कन्धे ३ अध्याय: ॥
स्वर्व्वेश्याविशेष । यस्या शापात् ब्रह्मणोऽपूज्यत्व जातम् । यथा,—
"यतो हससि गर्व्वेण ततोऽपूज्यो भवाचिरम् ।
अचिराद्दर्पभङ्ग ते करिष्यति हरि. स्वयम् ॥
निबोध शरणं ब्रह्मन् ! स्वर्व्वेश्यायास्च साम्प्रतम् ॥
तवैव कवच स्तोत्रं मन्त्रं गृह्णाति यो नर. ।
भविता तस्य विघ्नश्च स यास्यत्युपहास्यताम् ॥
भविता वार्षिकी पूजा देवतानां युगे युगे ।
तव माघास्य सङ्क्रान्त्यां न भविष्यति सा पुन ॥
इत्युक्त्वा मोहिनी शीघ्रं जगाम मदनालयम् ।
तेन सार्द्धं रति कृत्वा बभूव विज्वरा पुन: ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ३३ अध्याय: ॥
विस्तरस्तु ब्रह्मनुशब्दे द्रष्टव्य ॥ ( मोहकर्त्तरि त्रि । यथा, भागवते । ३ । ६ । ३५ ।
"अतो भागवती माया मायिनामपि मोहिनी ।
यत स्वयञ्चात्मवर्त्मात्मा न वेद किमुतापरे ॥")

मौकुलि., पु, काक: । इति हेमचन्द्र. । ४ । ३८८ ॥
( यथा, उत्तररामचरिते २ अङ्के ।
"कूजत्कुञ्जकुटीरकौशिकघटाघुत्कारवत्कीचक-
स्तम्बाडम्बरमूकमौकुलिकुल क्रौञ्चावतोऽय गिरि ।
एतस्मिन् प्रचलाकिनां प्रचलतामुद्वेजिता: कूजितै-
रुद्वेल्लन्ति पुराणचन्दनतरुस्कन्धेषु कुम्भीनसा. ॥")

मौक्तिक क्ली, ( मुक्तैव । मुक्ता + "विनयादिभ्य ठक् ।" ५ । ४ । ३४ । इति ठक् । ) मुक्ता । इत्यमर: ।२।९।९३॥ (यथा, चाणक्यशतके ।५५।
"शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो नहि सर्व्वत्र चन्दन न वने वने ॥"
तथास्य पर्य्याय: ।
"मौक्तिकं शौक्तिकं मुक्ता तथा मुक्ताफलञ्च तत् ।
अभावे मौक्तिकस्यापि मुक्ताशुक्तिं प्रयोजयेत ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे द्वितीये भागे ॥)

मौक्तिकतण्डुल:, पु, ( मौक्तिकमिव शुक्ल: तण्डुलोऽस्य । ) धवलयावनाल: । इति राजनिर्घण्ट: ॥

मौक्तिकप्रसवा स्त्री, ( मौक्तिकस्य प्रसवा । ) शुक्ति: । इति राजनिर्घण्ट: ॥

मौक्तिकशुक्ति, स्त्री, ( मौक्तिकानां शुक्ति: । ) शुक्ति: । इति राजनिर्घण्ट: ॥ मुक्तार झिनुक् इति भाषा ॥

मौखं, क्ली, ( मुखस्येदमिति । मुख + अण् । ) मुखसम्बन्धाधीनपापम् । तत्तु अभक्ष्यभक्षणरूपं तत्र क्लीवम् । संसर्गरूपस्य तस्य प्रायश्चित्त यथा । सुमन्तु: । यश्च तैर्यौनमौखस्रौवाणां सम्बन्धानामन्यतमेन सह सम्पर्कमियात् तस्याप्येतदेव प्रायश्चित्तं विदध्यात् । दद्यात् कुर्य्यात् । एतदेवेति द्वादशवार्षिकमित्यर्थ । अत्र याजनादीनामन्यतमेन संवत्सरेण पततीत्यवगम्यते । इति शूलपाणिकृतप्रायश्चित्तविवेक: ॥ मुखसम्बन्धिनि, त्रि ॥

मौखर्य्यं, क्ली मुखरत्वत् । मुखरस्य भाव इत्यर्थे ष्यञ्प्रत्ययेन निष्पन्नम् ॥

मौखिक, त्रि, मुखसम्बन्धि । मुखस्येदमित्यर्थे ष्णिक् (ठक्) प्रत्ययेन निष्पन्नम् ॥

मौञ्जी, स्त्री, ( मुञ्जस्येयमिति । मुञ्ज + अण् । स्त्रियां ङीप् । ) मुञ्जनिर्म्मितमेखला ॥ ( यथा, शिशुपालवधे । १ । ६ ।
"पिशङ्गमौञ्जीयुजमर्ज्जुनच्छवि
वसानमेणाजिनमञ्जनद्युति ।
सुवर्णसूत्राकलिताम्बराधरां
विडम्बयन्तं शितिवाससस्तनुम् ॥"
"मुञ्जस्तृणविशेषस्तन्मयीमेखला मौञ्जी ।" इति तट्टीकायां मल्लीनाथ. ॥ ) यथा,—
"विप्रस्य क्षत्रियस्यापि मौञ्जी स्याद्दक्षिणायने ।
दक्षिणे च विशां कार्य्यं नानध्याये न सङ्क्रमे ॥"
मनु. ।
"मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य मेखला ।
क्षत्रियस्य च मौर्व्वी ज्या वैश्यस्य शणतान्तवी ॥
मुञ्जालाभे तु कर्त्तव्या कुशाश्मन्तकवल्वजै. ।
त्रिवृता ग्रन्थिनैकेन त्रिभि: पञ्चभिरेव वा ॥"
इति संस्कारतत्त्वम् ॥

मौञ्जीतृणाख्य:, पु, ( मौञ्जीतृणमित्याख्यास्य । ) मुञ्ज. । इति राजनिर्घण्ट. ॥

मौञ्जीपत्रा, स्त्री, ( मौञ्जीपत्रमिव पत्रमस्या. । ) वल्वजा । इति राजनिर्घण्ट. ॥

मौञ्जीवन्ध , पुं, ( मौञ्ज्या बन्ध. बन्धनम् । ) मुञ्जमेखलाबन्धनम् । उपनयनमिति यावत् । यथा,
"जन्मभादष्टमे सिंहे नीचस्थे शत्रुभे गुरौ ।
मौञ्जीवन्ध: शुभ शोक्तश्चेत्रे मीनगते रवौ ॥"
इति ज्योतिर्निबन्धे नारदवचनम् ॥

मौढ्य, क्ली, (मूढस्य भाव.कर्म्म वा । मूढ + "गुणवचनब्राह्मणादिभ्य: कर्म्मणि च ।" ५।१।१२४ । इति ष्यञ् ।) मोह: । इति हेमचन्द्र. ।२।२३४॥
( यथा, श्रीमद्भागवते । ३ । २९ । २२ ।
"यो मां सर्व्वेषु भूतेषु सन्तमात्मानमीश्वरम् ।
हित्वार्च्चां भजते मौढ्याद्भस्मन्येव जुहोति स: ॥"
पु, मूढस्यापत्यम् । मूढ + "कुर्व्वादिभ्यो ण्य: ।" ४ । १ । १५१ । इति ण्य: । मूढपुत्त्र: । इति व्याकरणम् ॥)

मौद्गलि , पु, काक: । इति त्रिकाण्डशेष: ॥

मौद्गल्य., पु, (मुद्गलस्यापत्यमिति । मुद्गल + ष्यञ् ।) मुद्गलमुनिपुत्त्र. । स च गोत्रकारक. । अस्य पञ्च प्रवरा: यथा । और्व्वच्यवनभार्गवजामदग्न्याप्नुवन्त. । इति कुलदीपिका ॥ ( यथा, हरिवंशे । ३२ । ७० ।
"मुद्गलस्य तु दायादो मौद्गल्य: सुमहायशा: ॥)

मौद्गीन, क्ली, ( मुद्गाना भवन क्षेत्रमिति । मुद्ग + "धान्यानां भवने क्षेत्रे खञ् ।" ५ । २ । १ । इति खञ् । ) मुद्गभवोचितक्षेत्रम् । इत्यमर. । २ । ९ । ८ ॥

मौन, क्ली, (मुनेर्भाव इति । मुनि + अण् ।) शब्दप्रयोगराहित्यम् ॥ तत्पर्य्याय' । अभाषणम् २ । तूष्णीम् ३ तूष्णीकाम् ४ । इत्यमर ।३।४।३६ ॥
( यथा, रघुवंशे । १ । २२ ।
"ज्ञाने मौन क्षमा शक्तौ त्यागे श्लाघाविपर्य्यय. ।
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥" )
कर्म्मविशेषे मौनाचरण यथा,—
"उच्चारे मैथुन चैव प्रस्रावे दन्तधावने ।
स्नाने भोजनकाले च षट्सु मौन समाचरेत् ॥"
इति तिथ्यादितत्त्वम् ॥

मौनी, [न्] पु, (मौनमस्यास्तीति । मौन + "अत इनिठनौ ।" ५।२।११५ । इति इनि: । ) मुनि । इति जटाधर. ॥ ( यथा, मार्कण्डेये ।७५।६६ ।
"तत: स चिन्तयामास राजा जामातृकारणम् ।
विवेद च न तन्मौनी जगदेऽर्थश्च त नृप. ॥")
मौनयुक्ते, त्रि । यथा,—
"सिनीवाली कुहूर्व्वापि यदि सोमदिने भवेत् ।
गोसहस्रफल दद्यात् स्नान यन्मौनिना कृतम् ॥
एतच्च मौनमरुणोदयमारभ्य स्नानपर्य्यन्त कार्य्यं न तु स्नानकालमात्रे ।" इति तिथ्यादितत्त्वम् ॥

मौनेय , पु, ( मुनेरपत्य पुमान् । मुनि + "इत श्चानिञ ।" ४।१।१२२ । इति ढक् । ) गन्धर्व्वगणविशेष: । यथा,—
"गन्धर्व्वाप्सरस: पुण्या मौनेयास्तु निबोधत ।
चित्रसेनोग्रसेनौ तु ऊर्णायुरनिघस्तथा ॥
धृतराष्ट्रस्तथोमाश्च सूर्य्यवर्च्चास्तथैव च ।
युगपत्तृणपत्काष्णौ निर्दिष्टश्चित्ररथस्तथा ॥
त्रयोदश: शालिशिरा: पर्ज्जन्यश्च चतुर्द्दश' ।
इत्येते देवगन्धर्व्वाश्चतुर्व्विंशश्चभाषरा ॥"
इति वह्निपुराणम् ॥

(अप्सरोभेदे, स्त्री। यथा, हरिवंशे ।२२८।४०।
"काश्या शारद्वती चैव मौनेयाम्बरसः स्मृताः।")

मौरजिकः, त्रि, (मुरजवादनं शिल्पमस्य। मुरज+"शिल्पम्।"४।४।५५। इति ठक्।) मुरजवादकः। इत्यमरः ।२।१०।१३॥

मौर्ख्यं, क्ली, (मूर्खस्य भावः। मूर्ख+"वर्णदृढा-दिभ्यः ष्यञ् च।"५।१।१२३। इति ष्यञ्।) जाड्यम्। इति हेमचन्द्रः।२।२२६॥ (यथा, सुश्रुते शारीरस्थाने ४ अः।
"अनवस्थितता मौर्ख्यं भीरुत्वं सलिलार्थिता।")

मौर्व्वी, स्त्री, (मूर्व्वाया विकारः। मूर्व्वा+"अव-यवे च प्राण्योषधिवृक्षेभ्यः।" ४।३।१३५। इति अण्। ङीप्।) धनुर्गुणः। इत्यमरः। २।८।८५। (यथा, रघु.।१।१९।
"शाखेष्वकुण्ठिता बुद्धिर्मौर्व्वी धनुषि चातता।")
अश्वमञ्ची। इति रत्नमाला॥ कोंगा इति भाषा॥ (मूर्व्वामयी। यथा, मनौ ।२।४२।
"मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य मेखला।
क्षत्रियस्य तु मौर्व्वी ज्या वैश्यस्य शणतान्तवी।")

मौल, पु (मूलं वेदेति। मूल+अण्।) भूम्यादे-र्मूलज्ञाता। मोड़ल् इति भाषा। यथा,—
"यत् परम्परया मौलाः सामन्ताः स्वामिनं विदुः।
तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही॥"
इति दायतत्त्वम्॥
तस्य लक्षणं यथा,—
"ये तत्र पूर्व्वं सामन्ताः पश्चाद्देशान्तरं गताः।
तन्मूलत्वात्तु ते मौला ऋषिभिः परिकीर्त्तिताः॥"
इति मिताक्षरा॥
(विजिगीष्वरिमध्योदासीनः। यथा, कामन्द-कीये।८।३४।
"चत्वारः पार्थिवा मौला. पृथङ्मित्रैः. सहा-ष्टकम्॥"
मूलभूते, त्रि। यथा, तत्रैव।८।२५। [था।
"मौला द्वादश याश्चैता अमात्याद्यास्तथा च सप्ततिश्चाधिका ज्ञाताः सर्व्वं प्रकृतिमण्डलम्॥")

मौलिः, पु, स्त्री, (मूल+सुतङ्गमादित्वात् इञ्।) चूडा। (यथा, महाभारते। ६।५९।५।
"एवमुक्ता स वामेन पदा मौलिमुपास्पृशत्॥
शिरश्च राजसिंहस्य पादेन समलोड़येत्॥")
किरीटम्। (यथा, हरिवंशे। ९०।३०।
"इयञ्च सा मया मौलिराहृता वरुणालयात्॥")
संयतकेशः। इत्यमरः।३।३।१६२। (यथा, रघौ।७।६६।
"स चापकोटीनिहितैकबाहुः
शिरस्त्रनिष्कर्षणभिन्नमौलिः।
ललाटबद्धश्रमवारिबिन्दु-
र्भीतां प्रियामेत्य वचो बभाषे॥")
मस्तकम्। इति हेमचन्द्रः।३।२।२३०॥
(यथा, आर्य्यासप्तशत्याम्।४२४।
"भालनयनेऽपि रिन्दुर्मौलौ गाङ्गे भुजङ्गमणि-दीपाः॥"
प्रधानः। यथा, मार्कण्डेये।५८।१४।
"मौलयस्ते महाकायाः शाकपोतकरम्भकाः॥")

मौलिः, पुं, (मूलस्यादूरभवः। मूल+सुतङ्ग-मादित्वादिञ्।) अशोकवृक्षः। इति मेदिनी॥

मौलिः, स्त्री, (मूले जाता। मूल+इञ्।) भूमिः। इति मेदिनी॥

मौलिकः, पु, (मूले आद्ये जातः। मूल+ठञ्।) कुलीनभिन्नः। यथा राढ़ीयवारेन्द्रब्राह्मणस्य श्रोत्रियः तथा कायस्थस्य मौलिकः। एवं दाक्षि-णात्यवैदिकब्राह्मणस्य अन्यपूर्व्वापरिणेतापि सन् वंशजाख्यः। वङ्गजकायस्थस्य च मध्यमशब्द-वाच्यः। यथा। अथ मध्यमलक्षणमाह। मध्यमशब्दो यन्तृ इत्यमः। विस्तरविस्तृतः। मध्यस्य कुलमध्यस्थकुलीनस्य विश्रामस्थान-मित्यर्थः। मध्यमशब्दस्य लक्षणाकारम्। कुली-नेतरसिद्धवंशजातकन्ये सति दशपुरुषावधि अनपायिसत्कुलार्थनत्व मध्यमत्वम्। स च द्विविधः। सिद्ध. साध्यश्च। सिद्धस्य प्रकृत-मध्यमत्वम्। प्रकृतसिद्धवंशजातत्वे सति दश-पुरुषावधिकुलार्थकत्वं सिद्धत्वम्। सिद्धपदा-भावत्वे सति दशपुरुषावधिकुलार्थकत्वं साध्य-त्वम्। अस्य प्रशंसामाह।
"कुलीनकुलरक्षार्थं विधाहेश मीमांसया।
एतेषां गुणमाश्रित्य मध्यमः कुलमुत्तमम्॥"
इति कुलदीपिका॥*॥
दक्षिणराढ़ीयकायस्थस्याष्टसप्तमौलिका यथा,—
"गौड़ेऽष्टौ कीर्त्तिमन्तश्चिरवसतिकृता मौलिका-स्ते हि सिद्धा-
स्ते दत्ता. सेनदासाः करगुहसहिता पालिताः सिंहदेवाः।
ये वा पद्माभिमुख्याः स्थितिविनयगुणः सप्ततिस्ते हि पूर्व्वा
मित्राद्या वीक्ष्य राज्ञा चरणगुणयुता मौलिक-त्वेन साध्याः॥"
अपि च।
"सेनो दत्तः करो घोषो दासो देवः प्रतिष्ठितः।
पालितः सिंहधर्म्मज्ञो गुहः सप्तमौलिकाः. स्मृताः॥"*॥
द्विसप्ततिसाध्यमौलिका यथा,—
"होड़ स्वरधरधरणी नाग
आयित्य सोम मैत्रर नाम।
भञ्जो बिन्दो गुह बल लोध
शर्म्मा वर्म्मा हुइ भूँयि चन्द्र॥
रुद्रो रक्षित राणादित्यो
विष्णुनाग खिल पिल गूत।
इन्द्रो गुप्त पालो भद्र
ब्योमब्राङ्कुर बन्धुर नाथ॥
श्यामविर्द्धिशो मानो गण्डो
राहा राणा राहुत साना।
दाहा दाना गण उपमाना॥
राम: चोमो घर वै जोय:
पीम्नीतलधार्णव न्याश:।
शक्तिभूतो नन्दी शान
मेमो हेमो यतन रुद्र।
गुड़ कीर्त्तिवंश. कुण्डो
नन्दी धोमो धनुर्गीन॥"
इति द्विसप्ततिमौलिकाः॥*॥
अन्यच।
"देवौ भूतैरभक्तो गुहसहगुणो दाम इशान-दास
सेनो दत्तः सुदत्तामहितजनवरः पालितो धर्म्मपालः।
सिंह. सिंहप्रतापः स्थितिनिकरकरादानदत्त करोऽमौ
गौड़ेऽष्टौ संस्थितास्ते गणगणनिपुणा मौलिक-त्वेन सिद्धाः॥*॥
होड़नागधरगोविलसोमा
भञ्जविन्दगुहराजराहुताः।
नन्दपालचनमामरक्षिता
सोमशर्म्मभुँयिवर्म्मचन्द्रका॥
चन्द्रशो विगुयिभदपैसुरा
गण्डगुप्तधरकीर्त्तिवद्दना।
हेमहेमगगनापविष्णुशो
नागनन्दिपलहुइधनुर्गुणा॥
तेजोऽगेवस्वरधरायिच शक्तिभूताः
सोमोप शान विदशोल यशोम नन्दी।
दाहाकुरेन्द्रशुभकुण्डमनोपमाना
दानाशगूतविदिता भुवि कीर्त्तिमन्तः॥
होमादित्यौ राम राहा साना च खामक-स्तथा।
द्विसप्ततिमिता साध्या मौलिका विदिता क्षितौ॥"
इति कुलाचार्य्यकारिका॥*॥
(देशविशेष। यथा, मार्कण्डेये। ५७। ४८।
"पौरिका मौलिकाश्चैव अश्मका भोग-वर्द्धनाः॥")

त्रि, मूलसम्बन्धिनि मौलसम्बन्धिनि च॥ (भार-भूतं मूलं हरति वहत्यावहति वा। मूल+"हरति वहत्यावहति भाराद् वंशादिभ्यः।" ५।१।५०। इति ठञ्। मूलभारहारके मूलभार-वाहके मूलभारानेतरि च। इति व्याकरणम्॥)

मौषलं, क्ली (मूषलमिव। मूषलस्येदमिति वा। मूषल+अण्।) मूषलवत्। यथा,—
"गङ्गायां मौषलं स्नानं महापातकनाश-नम्॥"
इति प्रायश्चित्ततत्त्वधृतभविष्यपुराणवचनम्॥
महाभारतस्याष्टादशपर्व्वान्तर्गतपर्व्वविशेषः। यथा,—
"मौषलं पर्व्व चोद्दिष्टं ततो घोरं सुदारुणम्।
महाप्रस्थानिकं पर्व्व स्वर्गारोहणिकं ततः॥"
इति महाभारते आदिपर्व्व॥
मुषलसम्बन्धिनि, त्रि॥

मौष्टा, स्त्री, मुष्टिप्रहरणक्रीडा। इत्यमरः।३।५।५॥ "मुष्टिप्रहरणं अस्यां क्रीडायां मौष्टा ण.(अण्) णित्त्वे त्रिरिति वृद्धिः यस्येति च इति इकार-लोपः। स्त्रियामत इत्याप्।" इति तट्टीकायां भरतः॥

मौहूर्त्त, पुं, (मुहूर्त्तं अधीते वेद वा। मुहूर्त्त+ "तदधीते तद्वेद।" ४।२।५९। इत्यण्।) ज्योतिर्व्वित्ता। इत्यमरः। २। ८। १४॥ (यथा, महाभारते। १२। १२१। ४६।
"भिक्षुकाः प्राड्विवाकाश्च मौहूर्त्ता देव-चिन्तकाः॥")

मौहूर्त्तिकः, पुं, (मुहूर्त्तं तद्बोधकं शास्त्रमधीते वेद वा। मुहूर्त्त+"क्रतूक्थादिसूत्रान्तात् ठक्।" ४।२।६०। इति ठक्।) ज्योतिर्व्वित्ता। इत्यमरः। २। ८। १४॥ (यथा, कथासरित्-सागरे। २२। १३३।
"ततो मौहूर्त्तिकादेशादन्येद्युर्व्वरकन्यका।
सा मया परिणीता भून्निर्जिताखिलवस्तुना॥"
दक्षकन्यामुहूर्त्तोद्भवदेवगणविशेषः। यथा, भाग-वते। ६। ६। ६।
"मौहूर्त्तिका देवगणा मुहूर्त्तायाश्च जज्ञिरे॥"
मुहूर्त्तोद्भवे, त्रि। यथा, भागवते।५।१३।२२।
"मौहूर्त्तिकादुयस्य समागमाच्च मे
दुस्तर्कमूलोऽपहतोऽविवेकः॥")

म्ना, अभ्यासे। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-अनिट्।) अभ्यासः पौनःपुन्येनानु-शीलनम्। मनति सन्ध्यां ब्राह्मणः। इति दुर्गा-दासः॥

म्रक्ष, सङ्घाते। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्।) रेफयुक्तादिः। म्रक्षति पयसा शक्तून् लोकः। इति दुर्गादासः॥

म्रक्ष, क म्रक्षणे। स्नेहने। इति कविकल्पद्रुमः॥ (चुरा०-पर०-सक०-सेट्।) रेफयुक्तादिः। म्रक्षणं द्रव्यस्य द्रव्यान्तरेण योजनम्। क, म्रक्ष-यति घृतेनान्नं लोकः। इति दुर्गादासः॥

म्रक्षः, पुं, (म्रक्ष+घञ्।) स्वदोषगूहनम्। इति त्रिकाण्डशेषः॥ म्रक्षणश्च॥ (वधः। यथा, ऋग्वेदे। ८। ५०। १०।
"उयवाहुर्म्रक्षकृत्वा पुरन्दरो यदिमे शृणवद्ध-वम्।"
"म्रक्षकृत्वा वधकर्त्ता।" इति तद्भाष्ये सायणः॥)

म्रक्षणं, क्ली, (म्रक्ष+कर्म्मणि ल्युट्।) तैलम्। इति हेमचन्द्रः। ३। ८९॥ द्रव्यस्य द्रव्यान्तरेण संयोजनम्। स्नेहनम्। राशीकरणम्। इति म्रक्षधातोर्भावेऽनट प्रत्ययेन निष्पन्नम्॥

म्रद, म ष ङ मर्द्दे। इति कविकल्पद्रुमः॥ (भ्वा०-आत्म०-सक०-सेट्।) रेफयुक्तः। मर्द्दश्चूर्णी-करणम्। म, म्रदयति। ष, म्रदा। ङ म्रदते काननं दन्ती। इति दुर्गादासः॥

म्रदिमा, [न्] पुं, (मृदोर्भावः। मृदु+"पृथ्वा-दिभ्य इमनिज्वा।" ५।१।१२२। इति इम-निच्। "र ऋतो हलादेर्लघोः।" ६।४।१६१। इति ऋकारस्य रादेशः। "टेः।" ६।४।१५५। इति टेर्लोपः।) मृदुता। यथा, राजतरङ्गि-ण्याम्। ८। ५६६।
"म्रदिम्ना पापिनस्तस्य नाशायि क्रूरता जनैः।
मधुरिम्नो विषस्येव शक्तिः प्राणापहारिणी॥")

म्रदिष्ठः, त्रि, अतिशयमृदुः। मृदुशब्दादिष्ठप्रत्य-येन निष्पन्नः॥

म्रदीयान् [स्] त्रि, अतिशयमृदुः। मृदुशब्दा-दीयसुप्रत्ययेन निष्पन्नः॥

म्रातनं, क्ली, कैवर्त्तीमुस्तकम्। इति शब्दचन्द्रिका॥

म्रुच, उ इर् गत्याम्। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक० सेट्। क्त्वावेट्।) उ, म्रोचित्वा म्रोक्त्वा। इर्, अम्रुचत् अम्रोचीत्। इति दुर्गा-दासः॥

म्रुञ्च, उ गत्याम्। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्।) उ म्रुञ्चित्वा म्रुक्त्वा। इति दुर्गादास.॥

म्रेट, ऋ उन्मादे। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-अक०-सेट्।) ऋ, अमिम्रेटत्। म्रेटति लोकः उन्माद्यतीत्यर्थः। इति दुर्गादासः॥

म्रेड, ऋ उन्मादे। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-अक०-सेट्।) ऋ, अमिम्रेडत्। म्रेडति लोक उन्माद्यतीत्यर्थः। इति दुर्गादास.॥

म्लक्तं, क्ली, (म्लच्+क्तः।) चोरितम्।। यथा,—
"चोरित मुषितं म्लक्त प्रतीतन्तु प्रतीच्छितम्॥"
इति भूरिप्रयोगः॥

म्लानं, त्रि, (म्लै हर्षक्षये+क्तः। "संयोगादेरातो धातोर्यण्वतः।" ८। २। ४३। इति निष्ठातस्य नः।) मलिनम्। यथा,—
"मलिनं कच्चरं म्लानं कश्मलञ्च मलीमसम्॥"
इति हेमचन्द्रः॥
(यथा, मार्कण्डेये। ६२। १६।
"स चिन्तयामास तदा किं न्वेषा गजगामिनी।
निश्वासपवनम्लाना गिरावत्र वरूथिनी॥")
दुर्व्वलम्। (यथा,—
"अन्तेषु शूनं परिहीनमध्यं
म्लानन्तथान्तेषु च मध्यशूनम्॥"
इति माधवकृतरुग्विनिश्चयस्य पाण्डुरोगव्या-ख्याने विजयेनोक्तम्॥ (म्लै+भावे क्तः। म्लानिः। यथा, मार्कण्डेये। ३५। २४।
"रथ्यावसथपाथानतृत्पानम्लानकर्म्मसु।
आचामेच्च यथान्यायं वासो विपरिधाय च॥")

म्लानिः, स्त्री, (म्लै+निः। स च नित्। इत्युज्ज्वल-दत्तः। ४। ५१।) कान्तिक्षयः। यथा, देवी-भागवते। १। ६। १८।
"प्रेचकस्तु तदा ब्रह्मा देवी चैवान्तरीक्षगा।।
न मन्वतुस्तदा तौ तु विष्णुस्तु म्लानिमाप्त-वान्॥")

म्लिष्ट, क्ली, (म्लेच्छ्+क्तः+"क्षुब्धस्वान्तध्वान्तलग्न-म्लिष्टविरिब्धेत्यादि।" ७। २। १८। इति निपातितम्।) अस्पष्टवाक्यम्। तत्पर्य्याय.। अविस्पष्टम् २। इत्यमरः। १। ६। २१॥

म्लिष्ट', त्रि, (म्लेच्छ+क्तः।) अव्यक्तवाक्। म्लान'। इति मेदिनी। टे, २५॥

म्लुच, उ इर् गत्याम्। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्।) उ, म्लोचित्वा म्लुक्त्वा। इर्, अम्लुचत् अम्लोचीत्। इति दुर्गादासः॥

म्लेच्छ, कि देश्योक्तौ। इति कविकल्पद्रुमः॥ (चुरा०-वा भ्वा०-पर०-अक०-सक० च-सेट्।) देश्या ग्राम्या उक्तिर्देश्योक्तिरसंस्कृतकथनमित्यर्थ.। कि, म्लेच्छयति म्लेच्छति मूढः। अन्तर्व्विद्यामसौ विद्वान्न म्लेच्छति धृतव्रत इति हलायुधः॥ अनेकार्थत्वादव्यक्तशब्देऽपि। तथा चामर'। अथ म्लिष्टमविस्पष्टमिति। म्लेच्छ अव्यक्तायां वाचि इति प्राञ्चः। तत्र रमानाथस्तु। म्लेच्छति वटु-रव्यक्तं वदतीत्यर्थः। अव्यक्तायामिति पाठे कुत्-सितायां वाचीत्यर्थः।
'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः॥'
इति भाष्यवचनेन नञोऽप्राशस्त्यार्थत्वात् इति व्याख्यानाय हलायुधोक्तमुदाहृतवान्। इति दुर्गादासः॥

म्लेच्छ, क्ली, (म्लेच्छस्तद्देशः उत्पत्तिस्थानत्वेना-स्त्यस्य। अर्शआद्यच्।) हिङ्गुलम्। इति राजनिर्घण्टः॥ (तथास्य पर्य्यायः।
"हिङ्गुलन्दरदं म्लेच्छमिङ्गुलञ्चूर्णपारदम्॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥)

म्लेच्छः, पु, (म्लेच्छयति वा म्लेच्छति असंस्कृत वदतीति। म्लेच्छ्+अच्।) किरातशवरपुलि-न्दादिजातिः। इत्यमरः॥ पामरभेदः। पाप-रक्तः। अपभाषणम्। इति मेदिनी। छे, ६॥ म्लेच्छादीनां सर्व्वधर्म्मराहित्यमुक्तं यथा, हरि-वंशे। १४। १५—१६।
"सगर स्वां प्रतिज्ञाञ्च गुरोर्व्वाक्यं निशम्य च।
धर्म्मं जघान तेषां वै वेशान्यत्वं चकार ह॥
अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्जयत्।
जवनानां शिरः सर्व्वं काम्बोजानान्तथैव च॥
पारदा मुक्तकेशाश्च पह्लवाः श्मश्रुधारिणः।
निःस्वाध्यायवषट्कारा. कृतास्तेन महात्मना॥
शका जवनकाम्बोजाः पारदा' पह्लवास्तथा।
कोलसर्पा' समहिषा दार्व्वाश्चोलाः सकेरलाः,
सर्व्वे ते क्षत्रियास्तात धर्म्मस्तेषां निराकृत.॥
वशिष्ठवचनाद्राजन् सगरेण महात्मना॥"
शकानां शकदेशोद्भवानां क्षत्रियाणाम्। एव जवनादीनामिति। अत्र जवनशब्दस्तद्देशोद्भव-वाची चवर्गतृतीयादि। जवनो देशवेगिनो-रिति त्रिकाण्डशेषाभिधानदर्शनात्॥ * ॥ तेषां म्लेच्छत्वमप्युक्तं विष्णुपुराणे। तथाहि तान् जवना-दीनुपक्रम्य ते चात्मधर्म्मपरित्यागात् म्लेच्छत्वं ययुरिति। बौधायन.।
"गोमांसखादको यश्च विरुद्धं बहु भाषते।
सर्व्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते॥"
इति प्रायश्चित्ततत्त्वम्॥ * ॥
अपिच। देवयान्यां ययातेर्द्वौ पुत्त्रौ यदु. तुर्व्वसुश्च।

शर्म्मिष्ठायां च, पुत्राः द्रुह्युः अनुः पुरुश्च। तत्र यदुप्रभृतयश्चत्वारः पितुराज्ञाहेलनं कृतवन्तः पित्रा शप्ताः। ज्येष्ठपुत्त्र यदु शशाप तव वंशे राजा चक्रवर्त्ती मा भूदिति। तुर्व्वसु-द्रुह्युनून् शशाप युष्माकं वंश्या वेदवाह्या म्लेच्छा भविष्यन्ति। इति श्रीभागवतमतम्॥ *॥

("असृजत् पह्नवान् पुच्छात् प्रस्रावाद्द्राविडान् शकान्।
योनिदेशाच्च यवनान् शकृतः शबरान् बहून्॥
मूत्रतश्चासृजत् काश्चीच्छरभांश्चैव पार्श्वतः
पौण्ड्रान् किरातान् यवनान् सिंहलान् बर्व्वरान् खशान्॥
चिबुकांश्च पुलिन्दांश्च चीनान् हूणान् सकेरलान्।
ससर्ज्ज फेनतः सा गौर्म्लेच्छान् बहुविधानपि॥"
सा वशिष्ठस्य धेनुः। इति महाभारते।१।१७६। ३५—३७।) अन्यच्च। "शकयवनकाम्बोज-पारदपह्नवा हन्यमानास्तत्कुलगुरुं वशिष्ठं शरणं ययुः। अथैतान् वशिष्ठो जीवन्मृतकान् कृत्वा सगरमाह। वत्स वत्सालमेभिर्जीवन्मृत-कैरनुसृतैः। एते च मयैव त्वत्प्रतिज्ञापालनाय निजधर्म्मद्विजसङ्गपरित्यागं कारिताः। स तथेति तद्गुरुवचनमभिनन्द्य तेषां वेशान्य-त्वमकारयत्। यवनान्मुण्डितशिरसोऽर्द्धमुण्डान् शकान् प्रलम्बकेशान् पारदान् पह्नवांश्च श्मश्रु-धरान् निःस्वाध्यायवषट्कारानेतानन्यांश्च क्षत्त्रि-यांश्चकार। ते चात्मधर्म्मपरित्यागाद्ब्राह्मणैश्च परित्यक्ता म्लेच्छतां ययुः।" इति विष्णुपुराणे।४। ३।१८—२१॥ *॥ प्रकारान्तरेण तस्योत्-पत्तिर्यथा —

सूत उवाच।
"वंशे स्वायम्भुवस्यासीदङ्गो नाम प्रजापतिः।
मृत्योस्तु दुहिता तेन परिणीतातिदुर्म्मुखी॥
सुनीथा नाम तस्यास्तु वेनो नाम सुतः पुरा।
अधर्म्मनिरतः कामी बलवान् वसुधाधिपः।
लोकेऽप्यधर्म्मकृच्चासीत् परभार्य्यापहारकः॥
धर्म्माचारप्रसिद्ध्यर्थं जगतोऽस्य महर्षिभिः।
अनुनीतोऽपि न ददावनुज्ञां स यदा ततः॥
शापेन मारयित्वैनमराजकभयार्द्दिताः।
ममन्थुर्ब्राह्मणास्तस्य बलाद्देहमकल्मषाः॥
तत्कायान्मथ्यमानात्तु निपेतुर्म्लेच्छजातयः।
शरीरे मातुरंशेन कृष्णाञ्जनसमप्रभाः॥"
इति मत्स्यपुराणे।१०।३—८॥ *॥

म्लेच्छभाषाभ्यासनिषेधो यथा —
"न सातयेदिष्टकाभिः फलानि वै फलेन तु।
न म्लेच्छभाषां शिक्षेत नाकर्षेच्च पदासनम्॥"
इति कौर्म्मे उपविभागे १५ अध्यायः॥ ५॥

तस्य मध्यमा तामसी गतिर्यथा, मानवे। १२।४३।
"हस्तिनश्च तुरङ्गाश्च शूद्रा म्लेच्छाश्च गर्हिताः।
सिंहा व्याघ्रा वराहाश्च मध्यमा तामसी गतिः॥"
(मन्त्रणाकाले म्लेच्छापसारणमुक्तं यथा, मनु-संहितायाम्।७।१४९।
"जडमूकान्धवधिरांस्तैर्य्यग्योनान् वयोऽति-गान्।
स्त्रीम्लेच्छव्याधितव्यङ्गान् मन्त्रकालेऽपसार-येत्॥"
"अथवा एवंविधा मन्त्रिणो न कर्त्तव्याः। बुद्धि-विभ्रमसम्भवात्।" इति तद्भाष्ये मेधातिथिः॥
म्लेच्छानां पशुधर्म्मित्वम्। यथा, महाभारते।१। ८४।१५।
"गुरुदारप्रसक्तेषु तिर्य्यग्योनिगतेषु च।
पशुधर्म्मिषु पापेषु म्लेच्छेषु त्वं भविष्यसि॥")

म्लेच्छकन्दः, पुं, (म्लेच्छप्रियः कन्द इति मध्यपद-लोपी कर्म्मधारयः।) लशुनम्। इति राज-निर्घण्टः॥ (तस्य पर्य्यायो यथा,—
"लशुनस्तु रसोनः स्यादुग्रगन्धो महौषधम्।
अरिष्टो म्लेच्छकन्दश्च यवनेष्टो रसोनकः॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥)

म्लेच्छजातिः, स्त्री, (म्लेच्छस्य जातिरिति षष्ठी-तत्पुरुषः म्लेच्छरूपा जातिरिति कर्म्मधारयो वा।) गोमांसखादकबहुविरुद्धभाषकसर्व्वा-चारविहीनवर्णः। यथा,—
"गोमांसखादको यस्तु विरुद्धं बहु भाषते।
सर्व्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते॥"
इति प्रायश्चित्ततत्त्वधृतबौधायनवचनम्॥
अपि च।
"भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः॥"
इत्यमरः।२।१०।२०॥
अन्यच्च।
"पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाः शकाः।
पारदाः पह्नवाश्चीनाः किराताः दरदाः खशाः॥
मुखबाहूरुपज्जानां या लोके जातयो वहिः।
म्लेच्छवाचश्चार्य्यवाचः सर्व्वे ते दस्यवः स्मृताः॥"
इति मानवे १० अध्यायः॥

म्लेच्छदेशः, पुं, (म्लेच्छानां देशः म्लेच्छप्रधानो देशो वा।) चातुर्व्वर्ण्यव्यवस्थाविरहित-स्थानम्। तत्पर्य्यायः। प्रत्यन्तः २। इत्यमरः। २।१।७॥ भारतवर्षस्यान्तः प्रतिगः प्रत्यन्तः। म्लेच्छति शिष्टाचारहीनो भवत्यत्र म्लेच्छः अलः। स चासौ देशश्चेति म्लेच्छदेशः। किंवा म्लेच्छयन्ति अव्यक्तं वदन्ति शिष्टा-चारहीना भवन्तीति वा पचाद्यचि म्लेच्छा नीचजातयः, तेषां देशो म्लेच्छदेशः। भारतवर्ष-स्यान्तः शिष्टाचाररहितः कामरूपवङ्गादिः। उक्तञ्च।
"चातुर्व्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते।
म्लेच्छदेशः स विज्ञेय आर्य्यावर्त्तस्ततः परम्॥"
इति भरतः॥
(अपि च, मनुः।२।२३।
"कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततः परम्॥")

म्लेच्छभोजनं, क्ली, (भुज्यते यदिति। भुज्+कर्म्मणि ल्युट्। ततो म्लेच्छानां भोजनम्।) यावकः। इति शब्दरत्नावली॥

म्लेच्छभोजनः, पुं, (भुज्यतेऽसौ इति। भुज+ ल्युट्। म्लेच्छानां भोजनः।) गोधूमः। इति त्रिकाण्डशेषः॥

म्लेच्छमण्डलं, क्ली, (म्लेच्छानां मण्डलं समूहोऽत्र।) म्लेच्छदेशः। इति हेमचन्द्रः॥

म्लेच्छमुखं, क्ली, (म्लेच्छे म्लेच्छदेशे मुखमुत्पत्ति-रस्य। इत्यमरटीकायां रघुनाथः।) ताम्रम्। इत्यमरः।२।९।९७॥ (तथास्य पर्य्यायः।
"ताम्रमौडुम्बरं शुल्बमुदुम्बरमपि स्मृतम्।
रविप्रियं म्लेच्छमुखं सूर्य्यपर्य्यायनामकम्॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥
"ताम्रमौडुम्बरं शुल्बं विद्यात् म्लेच्छमुखं तथा॥"
इति गारुडे ९०८ अध्याये॥)

म्लेच्छाशः, पुं, (म्लेच्छैरश्यते इति। अश्+कर्म्मणि+घञ्।) म्लेच्छभोजनः। गोधूमः। इति केचित्॥

म्लेच्छास्यं, क्ली, (म्लेच्छे म्लेच्छदेशे आस्यमुत्पत्ति-रस्य।) ताम्रम्। इति हारावली॥

म्लेच्छितं, क्ली, (म्लेच्छ इ अव्यक्तोक्तौ+क्तः।) म्लेच्छ-भाषा। अपशब्दः। तत्पर्य्यायः। परभाषा २। इति हारावली॥

म्लेट, ऋ उन्मादे। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-अक०-सेट्।) ऋ, अमिम्लेटत्। म्लेटति लोकः उन्माद्यतीत्यर्थः। इति दुर्गादासः॥

म्लेड, ऋ उन्मादे। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-अक०-सेट्।) ऋ, अमिम्लेडत्। म्लेडति। उन्माद्यतीत्यर्थः। इति दुर्गादासः॥

म्लेव, ऋ ङ सेवने। इति कविकल्पद्रुमः॥ (भ्वा०-आत्म० सक०-सेट्।) ऋ, अमिम्लेवत्। ङ, म्लेवते। इति दुर्गादासः॥

म्लै, कान्तिक्षये। इति कविकल्पद्रुमः॥ (भ्वा०-पर० अक०-सेट।) म्लायति चन्द्रो दिवसे। इति दुर्गादासः॥

# वाचस्पत्यम्

( बृहत् संस्कृताभिधानम् )

कालिकातास्थ गवर्नमेन्टसंस्कृतमहाविद्यालय-दर्शन-व्याकरणाध्यापक-

श्रीतारानाथतर्कवाचस्पतिभट्टाचार्येण

सङ्कलितम्

तेनैव संस्कृतम्

## तृतीयो भागः

राष्ट्रिय संस्कृत संस्थान

मानित विश्वविद्यालय

५६-५७, इन्स्टीट्यूशनल एरिया, जनकपुरी

नई दिल्ली - ११००५८

प्रकाशक

डॉ० सी गिरि

कुलसचिव

राष्ट्रिय सस्कृत संस्थान

मानित विश्वविद्यालय

५६-५७, इन्स्टीट्यूशनल एरिया, जनकपुरी

नई दिल्ली - ११००५८

पुनर्मुद्रित संस्करण, २००६

मूल्य - १२९३ ०० (छ भागो का सेट)

मुद्रक

चौखम्बा संस्कृत सीरीज आफिस

के ३७/९९, गोपाल मन्दिर लेन

गोलघर (मैदागिन) के पास

पोस्ट बॉक्स न० १००८, वाराणसी-२२१ ००१ (भारत)

फोन ३३३४५८ (आफिस), ३३४०३२ एव ३३५०२० (आवास)

e-mail cssoffice@satyam net in

# VĀCASPATYAM

(A Comprehensive Sanskrit Dictionary)

*Compiled by*

**Sri Taranatha Tarkavachaspati**

Professor of Grammar and Philosophy

Govt Sanskrit College, Kolkata

**Vol. III**

**RASHTRIYA SANSKRIT SANSTHAN**

Deemed University

56-57, Institutional Area, Janakpuri

New Delhi-110058

Publisher
**Dr. C. Giri**
Registrar
**RASHTRIYA SANSKRIT SANSTHAN**
Deemed University
56-57, Institutional Area, Janakpuri
New Delhi-110058

Reprinted, 2006

Price 1293 00 (set of six vols)

*Printer*
**CHOWKHAMBA SANSKRIT SERIES OFFICE**
K 37/99, Gopal Mandir Lane
Near Golghar (Maidagin)
Post Box No 1008, Varanasi-221 001 (India)
Phone Off 333458, Resi 334032 & 335020
e-mail cssoffice@satyam net in

| वर्णः | स्वरः | कालः | स्थानम् | आभ्यन्तरप्रयत्नः | बाह्यप्रयत्नाः । |
|---|---|---|---|---|---|
| अ | उदात्तानुदात्तस्वरिताः | एकमात्रो ह्रस्वः | कण्ठः | विवृतम् | संवारनादघोषाः अल्पप्राणश्च |
| आ | उदा० १ | द्विमात्रो दीर्घः | कण्ठः | विवृतम् | संवारनादघोषाः अल्पप्राणश्च |
| अ३ | उदा० १ | त्रिमात्रः प्लुतः | स | तद् | ते च |
| इ | उदा० १ | एकमात्रो ह्रस्वः | तालु | तद् | ते च |
| ई | उदा० २ | २ द्विमात्रो दीर्घः | तद् | तद् | ते च |
| इ३ | उदा० १ | त्रिमात्रः प्लुत | तद् | तद् | ते च |
| उ | उदा० १ | एकमात्रो ह्रस्वः | ओष्ठौ | तद् | ते च |
| ऊ | उदा० १ | द्विमात्रो दीर्घः | तौ | तद् | ते च |
| उ३ | उदा० १ | त्रिमात्र प्लुत | तौ | तद् | ते च |
| ऋ | उदा० १ | एकमात्रो ह्रस्वः | मूर्धा | तद् | ते च |
| ॠ | उदा० १ | द्विमात्रो दीर्घः | स | तद् | ते च |
| ऋ३ | उदा० १ | त्रिमात्र प्लुत | स | तद् | ते च |
| ऌ | उदा० १ | एकमात्रो ह्रस्वः | दन्तमूलम् | तद् | ते च |
| ऌ३ | उदा० १ | त्रिमात्र प्लुतः | तद् | तद् | ते च |
| अस्य दीर्घाभावेऽपि लकारद्वययोगात् द्विमात्रता | | | दन्तमूलम् | तद् ईषत्स्पृष्टं च | ते च |
| ए | उदा० १ | द्विमात्रो दीर्घः | कण्ठतालुनी | विवृतम् | ते च |
| ए३ | उदा० १ | त्रिमात्र प्लुतः | कण्ठतालुनी | तद् | ते च |
| ऐ | उदा० १ | द्विमात्रो दीर्घ | कण्ठतालुनी | तद् | ते च |
| ऐ३ | उदा० १ | त्रिमात्रः प्लुत | कण्ठतालुनी | तद् | ते च |
| ओ | उदा० १ | द्विमात्रो दीर्घ | कण्ठोष्ठौ | तद् | ते च |
| ओ३ | उदा० १ | त्रिमात्र प्लुतः | कण्ठोष्ठौ | तद् | ते च |
| औ | उदा० १ | द्विमात्रो दीर्घ | कण्ठोष्ठौ | तद् | ते च |
| औ३ | उदा० १ | त्रिमात्र प्लुत | कण्ठोष्ठौ | तद् | ते च |
| एषामनुनासिकत्वे उदा० | | यथाप्राप्तम् | यथास्थानं नासिकाऽपि | तद् | अयमपि बाह्याः |
| अनुस्वारस्य | • | • | नासिका | स्पृष्टम् | संवारनादघोषा महाप्राणश्च |
| विसर्गस्य | • | ० | कण्ठ | स्पृष्टम् | विवारश्वासाघोषा महाप्राणश्च |
| ×क×ख | • | • | जिह्वामूलम् | स्पृष्टम् | विवारादय महाप्राणश्च |
| ×प×फ | • | ० | ओष्ठौ | स्पृष्टम् | विवारादय महाप्राणश्च |
| क | • | अर्धमात्रा | कण्ठमूलम् | स्पृष्टम् | विवारश्वासाघोषा अल्पप्राणश्च |
| ख | ० | अर्धमात्रा | तद् | तद् | विवारादय महाप्राणश्च |
| ग | • | सा | तद् | तद् | संवारनादघोषा अल्पप्राणश्च |
| घ | • | सा | तद् | तद् | संवारादयः महाप्राणश्च |
| ङ | • | सा | तद् नासिका च | तद् | संवारादयः अल्पप्राणश्च |
| च | • | अर्धमात्रा | तालु | तद् | विवारादयः अल्पप्राणश्च |
| छ | • | सा | तद् | तद् | विवारादय महाप्राणश्च |
| ज | | सा | त | तद् | संवारादय अल्पप्राणश्च |

१ वा० भाग ३

## स्वरवर्णविभागादि ।

स्वरवर्णा अकारादय औकारान्ता शिक्षामते द्वाविंशतिस्त्रयोविंशतिर्वा "स्वरा विंशतिरेकश्च द्व स्पृष्टश्चेति विज्ञेय लृकार प्लुत एव चेति" च शिक्षोक्तेः । तथाहि ह्रस्वदीर्घप्लुतभेदेन अ, इ, उ, ऋ, इत्येते द्वादश लृकारः ह्रस्व एव तस्य दीर्घाभावात् । ए, ऐ, ओ औ, इत्येते दीर्घप्लुतभेदात् अष्टौ इत्येकविंशति लृकारस्य लकारद्वययुक्तत्वेन ईषत्स्पृष्टतया द्व स्पृष्टत्वेन द्वाविंशतिः प्लुतस्य त्रयोविंशतिर्भेदा उक्ता । तेषां च प्रत्येकमुदात्तानुदात्तस्वरितभेदैः त्रैविध्येन ६६ भेदा ६९ वा भेदाः । पुनस्तेषामनुनासिकाननुनासिकभेदाभ्यां द्वैविध्यात् १३२ । १३८ वा संख्या भेदाः सर्वेषामेषां स्वयं राजमानत्वात् उदात्तादिस्वरवत्त्वाच्च स्वरशब्दवाच्यता ।

तन्त्रमते तु अनुस्वारविसर्गवर्ज्जिताः अ, आ, इ, ई, उ, ऊ, ऋ, ॠ, लृ, ॡ, इत्येते दश ए, ऐ, ओ, औ, इत्येते चत्वारः इत्येते षोडश । पाणिनीयमते लृकारस्य यथा दीर्घत्वाभावेऽपि लकारद्वययुक्तह्रस्वलृकारैकमात्रया द्विमात्रत्वसाम्यात् दीर्घत्वव्यवहार स्तथा लृकारादिशब्दे उक्तः । अनुस्वारविसर्गयोश्च अक्षरसमाम्नायसूत्रेषु अ, इ, उण्, इत्यादिषु माहेश्वरेषु चतुर्दशसु सूत्रेषु आम्नानाभावेऽपि भाष्यकृता अट्सूपसंख्यानेऽपि न स्वरवर्णत्वम् "अयोगवाहा विज्ञेया आश्रयस्थानभागिन" इत्युक्त्या स्वयंविराजमानत्वाभावात् उदात्तादिस्वरवत्त्वाभावाच्च । तयो स्वरवर्णत्वाभावेऽपि अट्सूपसंख्यानस्य णत्वणत्वकार्य्यार्थम् । तेन ऊर्णोमि इत्यादौ अनुस्वारव्यवधानेऽपि णत्वम् । अत्र च नुम्स्थानिकानुस्वारस्यैव निमित्तता न तद्भिन्नस्य, तेन बृंहि च बृंह इत्यादौ न णत्वम् । अन्य तु सर्व्वानुस्वारव्यवायेऽपि तेन तृंहणं बृंहणमित्यादौ णत्वम् "अट्कुप्वाङ्नुम्व्यवायेऽपीत्युक्ते तत्र अड्ग्रहणेनैवानुस्वारप्राप्तेरनुस्वारमात्रव्यवाये णत्वार्थं नुम् ग्रहणम् न तु भवदेव नुम्स्थानिकस्यैव ग्रहणमित्युक्तोदाहृतौ णत्वम् । सर्व्वेषां स्वरवर्णोच्चारणे विवृतं दूरावस्थानरूपम् आभ्यन्तरप्रयत्न "विवृतमूष्मणां स्वराणाञ्च" इति "अघोऽस्पृष्टा इति चोक्तेः । एषां बाह्यप्रयत्नास्तु घोषनादसंवाराः "कण्ठमध्ये तु घोषा स्युः संवृता नादभागिनः" इत्युक्तेः । यथा चैषां दूरावस्थानं तथा सरसायामलाभिरुक्त तत्र आभ्यन्तरप्रयत्नशब्दे उक्तम् । एतेषामुच्चारणस्थानानि प्रदर्श्यन्ते । अ इति वर्णः कण्ठमूलोच्चार्य्यः "जिह्वामूले तु कु प्रोक्त" इत्युक्ते । तत्र अ इति ह्रस्ववर्णः एकमात्रत्वात् । स च उदात्तानुदात्तस्वरितभेदात् त्रिधा, त्रिविधोऽपि अनुनासिकाननुनासिकरूपद्वैविध्यात् षड्विधः । एव आ इति दीर्घः द्विमात्रत्वात् तस्य च तथैव षड्विधत्वम् । अ३ प्लुतवर्णः त्रिमात्रत्वात् तस्यापि उक्तरीत्या षाड्विध्यम् तथा च अष्टादशानां संज्ञा पारिभाषिकी तकारपरत्वे स्वरूपपरता । एवम् इ, इति तालव्यः "इचुयशानां तालु" इत्युक्तेः । तस्यापि इ, ई, इ३ इति ह्रस्वदीर्घप्लुतसंज्ञा एकमात्रद्विमात्रत्रिमात्रताभेदात् तेषाञ्च प्रत्येकमुक्तरीत्या षाड्विध्यमित्यष्टादशविधता । तथाच इ, इति अष्टादशानां संज्ञा तपरत्वे कारपरत्वे च स्वरूपपरता । उ इति वर्णः ओष्ठोच्चार्य्यः "उपूपध्मानीयानामोष्ठौ" इत्युक्तेः स च ह्रस्वदीर्घप्लुतरूपः एकमात्रद्विमात्रत्रिमात्रताभेदात् त्रिविधः तेषां प्रत्येकमुक्तरीत्या षाड्विध्यमित्याष्टादशविधता । एवञ्च उ, इत्यष्टादशानां संज्ञा तपरत्वे कारपरत्वे च स्वरूपपरता । ऋ, इति मूर्द्धस्थानोच्चार्य्यः "ऋटुरषाणां मूर्द्धा" इत्युक्तेः स च ह्रस्वदीर्घप्लुतरूपः त्रिधा एकमात्रत्वादिभेदात् । तेषाञ्च प्रत्येकमुक्तरीत्या षाड्विध्यात् अष्टादशविधता । "ऋलृवर्णयोर्मिथः सावर्ण्यम्" इत्युक्ते लृकारस्य द्वादशभेदसहिता अष्टादशभेदाः तेन ऋ इति त्रिंशतां संज्ञा इति भेदः । तपरत्वे कारपरत्वे च स्वरूपपरता । लृवर्णः दन्तमूलोच्चार्य्यः "लृतुलसानां दन्ताः" इत्युक्तेः तस्य दीर्घाभावात् ह्रस्वप्लुतभेदेन द्वैविध्यम् तयोश्च प्रत्येकमुक्तरीत्या षाड्विध्यात् द्वादशविधतेति लृवर्णः द्वादशानां संज्ञा तपरत्वे कारपरत्वे च स्वरूपपरता । अ, इ, उ, ऋ, लृ, इत्येषां वर्णपरत्वे अष्टादशादीनामुक्तानां संज्ञा । अधिकं स्वरूपशब्दे द्रष्टव्यम् एतदन्येषां विभागादि तत्तच्छब्दादौ उक्तः ।

अकारादीनामनुक्ता वाचकशब्दा तन्त्रोक्ता वर्णाभिधाने दर्शितास्तेऽत्र क्रमेणोच्यन्ते यथा

अ "अ श्रीकण्ठः सुरेशश्च ललाटं चैकमात्रकः । पूर्व्वो दरी ब्रह्मिणी सारस्वतमिव शदः । महाप्राज्ञी वासुदेवो धमेश केशवोऽमृतम् । कीर्त्तिर्निवृत्तिर्गोधो नरका रिर्हरोऽजरः । ब्रह्मा रामानुजोह्रस्व कामश्च प्रथमाद्यक । प्रद्यावो कामरूपश्च कामेशीवासिनी वियत् । विश्वेश श्रीविष्णुकण्ठो प्रतिपत्तिर्निवर्त्तिनी । अर्कमण्डल पर्व्वाद्यो ब्राह्मणः कामकर्षिणी" ।

सेनमूर्त्तिं गत्वा तस्याः सङ्गमे कंसोत्पत्तिरिति तत्रोक्तम्। "एवमुक्त्वा दानवेन्द्रो गमनाय मनो दधे। कृष्णवाविष्ट-हृदयो दृष्ट्वा तामसितेक्षणाम्। ध्यात्वा प्रसह्य भगवान् ध्यानमेवाभ्यचिन्तयत्। ज्ञानसंध्यातमात्रे तु दृष्टं ज्ञानवताऽऽत्मतः। उग्रसेनस्य पत्नीति ज्ञात्वा हर्षमवाप स। उग्रसेनस्य वै रूपं कृत्वा स्वं परिवर्त्य च। उपासर्पन्महाबाहुः प्रहसन् दानवेश्वरः। अथमामव मनकैर्व्याज्याशामितवीर्य्यवान्। उग्रसेनस्य रूपेण मातरं ते व्यधर्षयत्। सा पतिस्निग्धहृदया भावेनोप-ससर्प तम्। शङ्किता चाभवत् पश्चात्तस्य गौरवदर्श-नात्। सा तस्मादुत्थिता भीता न त्वं मम पतिर्ध्रुवम्। कस्य त्वं विकृताचारो येनास्मि मलिनीकृता। एकपत्नी-व्रतमिदं मम सन्दूषितं त्वया। पत्युर्मे रूपमास्थाय गोपनीयेन कर्म्मणा। किं मां वक्ष्यन्ति रुषिता बान्धवाः कुलपांसनाम्। जुगुप्सिता च वत्स्यामि पतिपक्षैर्निरा-कृता। धिक् त्वामीदृशमत्यन्त दुष्कुलं व्युत्थितेन्द्रियम्। अविश्वास्यमनार्य्यञ्च परदाराभिमर्षणम्। स तामाह प्रसज्जन्तीं क्षिप्तः क्रोधेन दानवः। अहं वै द्रुमिलो नाम सौभस्य पतिरूर्जितः। किं मां क्षिपसि रोषेण मूढे! पण्डितमानिनि!। मानुषं पतिमाश्रित्य नीचं बन्धुवधे स्थितम्। व्यभिचाराद्दुष्यन्ति स्त्रियः स्त्रीमा-नगर्व्विते!। न भार्य्यां नियता बुद्धिस्त्वादृशीनां विशे-षतः। शृण्वन्ते हि स्त्रियो बह्व्यो व्यभिचारव्यतिक्रमम्। प्रसूता देवसदृशान् पुत्रानमितविक्रमान्। अतीव हि त्वं स्त्रीलोके पतिधर्म्मवती सती। यथा केषाम् विधुन्वन्ती भाषसे यद्यदिच्छसि। बहु लपसि यत्नाह त्वयोक्तो मत्तकाशिनि!। कंसस्त्वाद्दुर्मद्ध्वजी तव पुत्रो भवि-ष्यति। सा सरोषा पुनर्भूत्वा निन्दन्ती तत्र तं परम्। उवाच व्यथिता देवी दानवं दुष्टवादिनम्। धिक् ते वृत्तं सुदुर्वृत्त! यः सर्व्वा निन्दसि स्त्रियः। सन्ति स्त्रि-यो नीचवृत्ताः सन्ति चैव पतिव्रताः। याश्चैकपत्न्य-श्चरन्ते ऽरुन्धतीप्रमुखाः स्त्रियः। याभिर्धृता प्रजाः सर्व्वा लोकाश्चैव कुलाधम!। यस्त्वया मम पुत्रो वै दत्तो कुलविनाशन!। न मे बहुमतस्त्वेष शृणु चापि वचः ॥ उत्पत्स्यति पुमाल्लोके पतिवंशे ममाव्यय!। भवि-ष्यति च ते मृत्युर्यैव दत्तस्त्वया सुतः। द्रुमिलस्त्वे-वमुक्तस्तु जगामाकाशमेव तु"। कांस्यभाजनद्रव्ये कंसकमन्द्रे मन्यते कांस्यशोधनमारणविधानगुणाः भावप्र० उक्ता यथा

"अथ कांस्यस्य रीतेश्च शोधनन्त्वभिधीयते। पत्त्रीकृत-पत्राणि कांस्यस्याग्नौ प्रतापयेत्। निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके। गोमूत्रे च कुलत्थानां कषाये त्रि त्रिधा त्रिधा। एवं कांस्यस्य रीतेश्च विशुद्धिः संप्रजायते"। अथ मारणविधि "अर्कक्षीरेण संपिष्टो गन्धकस्तेन लेपयेत्। समेन कांस्यपत्राणि शुद्धान्यम्लवर्गैः सह। ततोमूषापुटे कृत्वा पचेत् गजपुटेन च। एवं पुटद्वयात् कांस्यं रीतिश्च म्रियते ध्रुवम्" एवं मारितयोः कांस्यस्य रीतेश्च गुणा "कांस्यं कषायं तीक्ष्णोष्णं लेखनं विशदं सरम्। गुरु नेत्रहितं रूक्षं कफपित्तहरं परम्"।

"कंसमन्थशूर्पपाय्यकाण्डान्तं द्विगौ" पा० द्विगुसमासे आद्युदात्तता। द्विकंसः। द्वौ कंसौ परिमाणमस्येति तद्धि-तार्थद्विगुः। कंसशब्दोऽर्द्धर्चादि। "का काशी का मथुरा का शीतलवाहिनी गङ्गा। कं सं जपान कृष्णः कंसवन्तं न बाधते शीतम्" विदग्धमुखमण्डने समानमन्त्रोत्तरदर्श-नात् दन्त्यमध्य एव। ६उग्रसेनकन्याभेदे स्त्री सा च देव-भागभार्य्या "कंसा कंसवती कङ्का शूरभूराष्ट्रपालिका। उग्रसेनदुहितरो वसुदेवानुजस्त्रियः"। "देवभागस्य कंसायां चित्रकेतुबृहद्बलौ" भाग०६,२४,२१,

**कंसक** न० कंसमेव स्वार्थे कन्। १कांस्ये तद्रूपधिगुणादि भावप्र० उक्तं यथा

"ताम्रत्रपुजमाख्यातं कांस्यं घोषं च कंसकम्। उपधातु-र्भवेत् कांस्यं द्वयोस्तरणिरङ्गयोः। कांस्यस्य तु गुणा ज्ञेयाः स्वयोनिसदृशा जनैः। संयोगजप्रभावेन तस्यान्येऽपि गुणाः स्मृताः"। "कांस्यं कषायं तिक्तोष्णं लेखनं विशदं सरम्। गुरु नेत्रहितं रूक्षं कफपित्तहरं परम्"। कंसमिव "इवे प्रतिकृतौ"पा० कन्। २कांस्यजाते काशीसे उपधातु-भेदे। "काशीसं धातुकाशीसं पांशुकाशीसमित्यपि। त-देव किञ्चित् पीतन्तु पुष्पकाशीसमुच्यते। काशीसमम्ल-मुष्णञ्च तिक्तञ्च तुवरं तथा। वातश्लेष्महरं केश्यं नेत्र-कण्डूविषप्रणुत्। मूत्रकृच्छ्राश्मरीश्वित्रनाशनं परिकी-र्त्तितम्" भावप्र० तद्गुणादि।

**कंसकार** पु० कंसं तन्मयपात्रं करोति कृ—अण् उप०स०। (कांसारि) वर्णसङ्करजातिभेदे "वैश्यायां ब्राह्मणाज्जातो ह्यम्बष्ठो गान्धिकोवणिक्। कंसकारशङ्खकारौ ब्राह्मणात् संभूवतुः" ब्रह्म०पु०। तेनैतस्याम्बष्ठत्वात् द्विजत्वमस्ति किन्तु सा जातिर्देशान्तरे प्रसिद्धा। गौड़देशवासिनस्तु शूद्राः। "विश्वकर्म्मा च शूद्रायां वीर्य्याधानं चकार सः। ततो

तृत्यत्वेन स० स्तुत०" हरिवं० १० अ० । "मातदौजे हरिं यज्ञे प्रसाद इति विश्रुत । पुरञ्जयस्य सुत इन्द्रवाहन इतीरितः । ककुत्स्थ इति चाप्युक्तः शृणु नामानि कर्मभि । कृतान्त आसीत् समरो देवानां सह दानवैः । पार्ष्णिग्राहो वृतो वीरो देवैर्दैत्यपराजितैः । वचनाद्देवदेवस्य विष्णोर्विश्वात्मनः प्रभोः । वाहनत्वे वृतस्तस्य वभूवेन्द्रो महावृषः । स सन्नद्धो धनुर्दिव्यमादाय विशिखान् शितान् । स्तूयमानस्तमारुह्य युयुत्सुः ककुदि स्थितः । तेनाप्यायितो विष्णोः पुरुषस्य परात्मनः । प्रतीच्यां दिशि दैत्यानां न्यरुणत्त्रिदशैः पुरम् । तैस्तस्य चाभूत् प्रधनं तुमुलं लोमहर्षणम् । यमाय भल्लैरनयद्दैत्यान् येऽभिययुर्मृधे । तस्येषुपाताभिमुखं युगान्ताग्निमिवोल्बणम् । विसृज्य दुद्रुवुर्दैत्या हन्यमानाः स्वमालयम् । जित्वा पुरं धनं सर्वं मवज्रिण्यपाणये । प्रत्ययच्छत् स राजर्षिरिति नामभिराहृतः." भाग० ९,६,११ "इक्ष्वाकुवंश्य ककुदं नृपाणां ककुत्स्थ इत्याहितलक्षणोऽभूत्" रघु । तस्यापत्यं शिवा० अण् । काकुत्स्थ तदपत्ये । "काकुत्स्थ ईषत् श्रवमाण आस्त" भट्टि ।

**ककुद्** स्त्री कं सुखं कौति कु-शब्दे क्विप् तुक् च पृषो० तस्य दः । वृषस्कन्धस्थस्थमांसपिण्डाकारे, (झुंट) इति ख्याते १वृषाङ्गभेदे २श्वेतच्छत्रादौ नृपचिह्ने, ३प्रधाने, ४पर्वताग्रभागे च । "आस्य निहत्य ककुदि पाविना प्राविशच्छनैः" भा० अनु० २९ अ० । ककुदिस्थित ककुत्स्थशब्दे उदा० ।

**ककुद** पु० न० कस्य देहस्य सुखस्य वा कु भूमिं ददाति दा-क । (झुँट) इति ख्याते १वृषाङ्गभेदे, २प्रधाने, ३नृपचिह्ने, छत्रादौ, ४पर्वताग्रभागे च । "इक्ष्वाकुवंश्यः ककुदं नृपाणाम्" रघु । "नृपतिककुदं दत्त्वा यूने सितातपवारणम्" रघुः । "स राजककुदव्यग्रपाणिभिः पार्श्ववर्त्तिभिः" रघु । बहु० अवस्थायामन्त्यलोपः समा० । अजातककुत् वत्सतरा इव । पूर्णककुत् तरुण । पर्वतभेदे चान्त्यलोप त्रिककुत् त्रिकूटगिरिः ।

**ककुदाप्** त्रि० ककुदं राजचिह्नमाप्नोति धारकत्वेन आप्नोति आप—अण् उप० स० । राजचिह्नधारके । तस्यापत्यम् रेवत्या० ठक् । काकुदिक तदपत्ये पु० स्त्री

**ककुदावर्त्त** पु० ककुदि आवर्त्तः । ककुदिस्थे दुष्टरोमावर्त्तभेदे । तस्य प्राणिस्थत्वात् निन्द्यत्वाच्च मत्वर्थे इनि । ककुदावर्त्तिन् तद्युक्ते निन्द्ये वृषे ।

**ककुद्मत्** पु० ककुदस्त्यस्य मतुप् यवादि० न मस्य व । १वृषे । "दर्पकृश ककुद्मान्" कुमा० । "अयोगतोर्ग्यैर्नदितं ककुद्मताम्" माघ । "मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः" "हृष्टः ककुद्मानिव चित्रकूटे" रघु । ककुद् सादृश्येनास्त्यस्य मतुप् । २ककुत्सदृशे वृष्णोद्गमसमानयुक्ते । "ऊर्मिं महत्त्विं ककुद्मान्" यजु० ८ ६, ककुद्मान् ककुच्छब्देन वृषस्कन्धे उन्नतप्रदेश उच्यते सादृश्ये मतुप्, तद्वन्मान्याद्युदकनिचयैर्युक्तः" वेददी० । ३ऋषभौषधौ" राजनि० ४पर्वते स्वामी

**ककुद्मती** स्त्री ककुदिव मांसपिण्डोऽस्त्यस्याः मतुप् यवा० न मस्य व ङीप् । कट्याम् अमर

**ककुद्मिन्** पु० ककुद्+अस्त्यर्थे मिनि । १वृषे २पर्वते च । "अष्टौ सहस्राणि ककुद्मिनामहम्" भा० आश्व० १०२अ० । ४रैवते नृपे पु० । "आनर्त्तस्य तु दायादो रेवोनाम महाद्युतिः । आनर्त्तविषयश्चासीत् पुरी चास्य कुशस्थली । रेवस्य रैवत पुत्रः ककुद्मी नाम धार्म्मिकः" हरिव० १० अ० ।

**ककुद्मिसुता** स्त्री ६त० । बलरामभार्य्यायां रेवत्याम् । ककुद्मिकन्यादयोऽप्यत्र "ककुद्मिकन्यावक्त्रान्तर्वासलब्धाधिवासया" माघः ।

तस्याः पूर्व्वकालिकायाश्चापि बलदेवपरिणयकथा यथा "रेवस्य रैवत पुत्रः ककुद्मी नाम धार्म्मिकः । ज्येष्ठ पुत्र शतस्यासीद्राज्यं प्राप्य कुशस्थलीम् । स कन्यासहितः श्रुत्वा गान्धर्वं ब्रह्मणोऽन्तिके । मुहूर्त्तभूत देवस्य गतं बहुयुगं प्रभो । । आजगाम युवैवाथ स्वां पुरीं यादवैर्वृताम् । कृतां द्वारवतीं नाम्ना बहुद्वारां मनोरमाम् । भोजवृष्ण्यन्धकैर्गुप्तां वासुदेवपुरोगमैः । ततस्तद्रैवतो ज्ञात्वा यथातत्त्वमरिन्दम । कन्यां तां बलदेवाय सुव्रतां नाम रेवतीम् । दत्त्वा जगाम शिखरं मेरोस्तपसि संस्थितः । रेमे रामोऽपि धर्म्मात्मा रेवत्या सहितः सुखी" १० अ० । युधिष्ठिरउवाच "कथं बहुयुगे काले समतीते द्विजोत्तम । न जरा रेवतीं प्राप्ता रैवतं वा ककुद्मिनम् । मेरुं गतस्य वा तस्य शर्य्यातेः सन्ततिः कथम् । स्थिता पृथिव्यामद्यापि श्रोतुमिच्छामि तत्त्वतः । नारद उवाच । न जरा क्षुत्पिपासा वा न मृत्युर्भरतर्षभ । । ऋतुचक्रं न भवति ब्रह्मलोके सदाऽनघ । ककुद्मिनस्तु तं लोकं रैवतस्य गतस्य ह । हृता पुण्यजनैर्भ्रात राक्षसैः सा कुशस्थली" भा० हरि० ११अ० ।

**ककुन्दर** न० कस्य शरीरस्य पृष्ठदेशस्य कुं भूमिं ददाति द—बा० खच् । पृष्ठवंशाधःस्थे गर्त्ताकारे कूपद्वये ।

